पूर्वभद्रपदा[२]श्चैव, प्रोष्ठपदा[3] स्तत:परम् ।
नक्षत्र श्चाप्यहिर्बुध्न[१]- देवता: स्तदनन्तरम् ।।१०२।।

प्रोष्ठपदा[२]श्च नक्षत्रो-त्तरभद्रपदा स्तथा ।
रेवती[१]पौष्णसा[२]ख्यातं, दाक्षायण्य:[१] शशिप्रिया:[२] ।।१०३।।

## ❀ राशिनामानि ❀

राशीनामुदयो लग्नं[१], स च मेषो[१] वृष[२] स्तथा ।
मिथुन.[3] कर्कट[४] सिंह.[५], कन्या[६] तुला[७] च वृश्चिक:[८] ।।१०४।।

धनु[९] श्च मकर[१०] श्चैव, कुम्भो[११] मीन[१२]श्च राशय. ।

## ❀ ग्रहनामानि ❀

अथग्रहाणां नामानि, ज्ञेयानि क्रमतो यथा ।।१०५।।

आरो[१] वक्रो[२] नवार्चि[3]श्च, माहेयो[४]ऽङ्गारक[५] स्तथा ।
आषाढाभू[६] कुजो[७] भौम.[८], लोहिताङ्ग[९]श्च मङ्गल.[१०] ।।१०६।।

बुध[१] सौम्य[२] श्रविष्ठाभू[3], श्यामाङ्ग[४]श्च प्रहर्षुल.[५] ।
चन्द्रात्मज[६] स्तथा ज्ञ[७]श्च, पञ्चार्चिः[८] रोहिणीसुत: ।।१०७।।

आङ्गिरसो[१] गुरु[२] वाग्मी[3], गी पति[४] बृहतीपति[५] ।
द्वादशार्चि[६] सुराचार्यो[७], वाचस्पति[८] बृहस्पति. ।।१०८।।

चित्रशिखण्डिजो[१०] जीवो[११], धीषणो[१२] फल्गुनीभव[१३]।
शुक्र.[१] काव्य.[२]कवि[3]र्धिष्ण्य[४], षोडशार्चि[५]श्च भार्गव:[६] ।।१०९।।

उशना[७]श्च भृगु[८] श्चैव, दैत्यगुरु[९] र्मघाभवः[१०] ।
शनैश्चरः[१] शनिः[२] सौरि.[३], सप्तार्चि [४] रेवतीभव [५] ॥११०॥

छायासुतो[६] ऽसितो[७] मन्दः[८], क्रूरात्मा[९] च यम[१०]स्थिरः[११] ।
पङ्गुः[१२]क्रोड[१३]स्तथा कालः[१४],नीलवासा[१५]महाग्रह[१६]॥१११॥

उपराग[१]स्तु स्वर्भाणु [२], सैंहिकेयो[३] विधुन्तुदः[४] ।
उपप्लव[५] स्तमो[६] राहु[७], र्भरणीभू[८] रथाऽऽहिकः[१]॥११२॥

अश्लेषाभू[२] श्च केतुश्च[३], शिखी[४] चेति ग्रहा मताः ।
उत्तानपादज[१] श्चैव, ध्रुवाख्यः[२] कथितो बुधैः ॥११३॥

## * अगस्त्यनामानि *

अगस्त्यो[१] ऽगस्ति[२] राग्नेयः[३], सत्याग्नि[४] रग्निमारुतः[५] ।
वातापिद्विड्[६] तथा क्वाथिः[७], और्वशेयो[८] घटोद्भवः[९] ॥११४॥

पीताब्धि.[११] वारुणि [१२] मैत्रा-वरुणिः[१३] कलशीसुत.[१४] ।
कौषीतकी[१] तु तद्भार्या, लोपामुद्रा[२] वरप्रदा[३] ॥११५॥

## * सप्तर्षि नामानि *

सप्तर्षयस्तु नामानि, मरीचि[१] रत्रि[२] रङ्गिराः[३] ।
पुलस्त्य[४] श्च महातेजाः, क्रतुः[५] वशिष्ठ[६] नामवान् ॥११६॥

पुलह.[७] सप्तमो ज्ञेयः, एते चित्रशिखण्डिनः ।

## * चन्द्र-सूर्यसंमिलितनामानि *

पुष्पवन्तौ[१] पुष्पदन्ता[२]-वेकोक्त्या चन्द्रभास्करौ ॥११७॥

## ❀ चन्द्र सूर्यग्रहणनामानि ❀

सूर्येन्द्वो राहुग्रासे[1] स्या-दुपराग[2] उपप्लवः[3] ।

## ❀ उपद्रवनामानि ❀

उपसर्ग[1] स्त्वरिष्टं[2] स्या-दुपलिङ्ग[3] मुपद्रव.[4] ॥११८॥
उत्पात[5]श्च तथाऽजन्य[6]-मीति[7]श्च तदनन्तरम् ।
एते चोपद्रवाः ज्ञेया, वह्न्यु-त्पात[1] उपाहितः[2] ॥११९॥

## ❀ कालनामानि ❀

कालो[1] दिष्टो[2] ऽप्यनेहाः[3] स्यात्, समयः[4] सर्वमूषकः[5] ।
कालो द्विधाऽवसर्पिण्यु-त्सर्पिणीकालभेदतः ॥१२०॥
षडरा अवसर्पिण्या-मुत्सर्पिण्यां त एव वै ।
एवं द्वादशभिश्चारैः, वर्तते कालचक्रकम् ॥१२१॥
अष्टादश निमेषाः स्युः, काष्ठा[1] काष्ठाद्वयं[1] भवेत् ।
लवस्तु तैः कला[1] पञ्च-दशभि रपि ज्ञायताम् ॥१२२॥
लेश[1] स्तु तद्द्वयेनैव, तैः पञ्चदशभि क्षण.[1] ।
नाडिका[1] तु क्षणैः षड्भि., धारिका[2] घटिका[3] च सा ॥१२३॥
तद्द्वयेन मुहूर्त्त[1]स्तु, तथा तैरपि त्रिंशता ।
अहोरात्रस्तु सम्पूर्ण, दिवस. कथितो बुधैः ॥१२४॥

## ❀ दिवसनामानि ❀

अह[1] र्दिन[2] ञ्च घस्त्र[3] द्यु[4], र्दिवसो[5] वासरो[6] दिवम्[7] ।

## ❀ प्रभातनामानि ❀

प्रभातं[1] तु विभातं[2] च, प्रत्यूषं[3] स्यादहर्मुखम्[4] ॥१२५॥

उषो[5] व्युष्टं[6] प्रगे[7] प्राह्णे[8], पूर्वेद्यु[9]श्च निशात्ययः[10] ।
गोसः[11] प्रात[12]श्च गोसर्गः[12], काल्यं कल्यं च प्रत्युषः ॥१२६॥

### ※ मध्याह्ननामानि ※

दिवामध्यं[1] तु मध्याह्नं[2], मध्यन्दिनं[3] तथैव च ।

### ※ सायं-सन्ध्याकालनामानि ※

दिनावसान[1] मुत्सूरो[2], विकालः[3] सबलि[4] स्तथा ॥१२७॥

सायं[5] तु पितृसूः[1] सन्ध्या[2], त्रिसन्ध्यं[1] तूपवैणवम्[2] ।
कुतपो[1] श्राद्धकाल[2] स्तु, भागोऽष्टमो दिनस्य यः ॥१२८॥

### ※ रात्रिनामानि ※

रात्रिः[1] रात्री[2] तमी[3] भौती[4], तमा[5] तमि[6] स्तमस्विनी[7] ।
त्रियामा[7] यामिनी[8] तुङ्गी[9], वासतेयी[10] विभावरी[11] ॥१२९॥

शर्वरी[12] शार्वरीः[13] श्यामा[14], वसति[15] र्वासुरा[16] तथा ।
निशीथिनी[17] निशा[18] नक्ता[19],
शताक्षी[20] क्षणदा[21] क्षपा[22] ॥१३०॥

वासरकन्यका[23] याम्या[24], निशीथ्या[25] च निषद्वरी[26] ।
रजनी[27] रजनिः[28] घोरा[29], पूतार्चि[30] श्चक्रभेदिनी[31] ॥१३१॥

क्षणिनी[32] राक्षसी[33] चैव, यामवती[34] च तामसी[35] ।
उशाः[36] उषा[37] तथा दोषा[38] ,इन्दुकान्ता[39] तथैवच ॥१३२॥

ज्यौत्स्नी[1] तु पूर्णिमारात्रि[2] स्तमिस्रा[1] दर्शयामिनी[2] ।
निशासमूह बोधार्थे, गणरात्रो[1] निशागणः[2] ॥१३३॥

पक्षिणी[1] पक्षतुल्याभ्या-महोभ्यां वेष्टिता क्षपा ।
ज्ञातव्या रजनीद्वन्द्वं[1], गर्भक[2] तु निशामुखम्[1] ॥१३४॥

दिनात्यय[2] प्रदोष[3] श्च, याम[1] स्तु प्रहर[2] स्तथा ।
निशीथ[1] स्त्वर्धरात्र[2]श्च, नि संपातो[3] महानिशा[4] ॥१३५॥

उच्चन्द्र[1] स्त्वपररात्र[2]-स्त्वन्धकारं[3] रजोबलम्[4] ।
तमिस्रं[5] तिमिरं[6] ध्वान्तं[7], तथा ऽन्धतमसं[8] तमः[9] ॥१३६॥

नीलपङ्को[10] निशावर्म,[11], दिनाण्डं[12] दिनकेसरः[13] ।
सन्तमसं[14] तथा वृत्रो,[15] ऽवतमसं[16] दिगम्बर ॥१३७॥

वियद्भूति[18] श्च भूच्छाया[19], रात्रिरागः[20] स्मृतो बुधै ।
तुल्यनक्तंदिवंकाले, विषुवद्[1] विषुवं[2] च यत् ॥१३८॥

पञ्चदशदिनानाञ्च, पक्ष[1] स बहुलो[1]ऽसित ।
कृष्णो निशाह्वयः ख्यातः, शुक्लो दिशाह्वय स्तथा ॥१३९॥

तिथि[1] स्तु कर्मवाटी[2] स्यात्, पक्षतिः[1] प्रतिपत्[2] तथा ।
पञ्चदश्यौ[1] यज्ञकालौ[2], पक्षान्तौ[3] चापि पर्वणी[4] ॥१४०॥

भूतेष्टापञ्चदश्यो र्यद्, पर्वमूलं[1] तदन्तरम् ।
प्रतिपत् पर्वसन्धिः स पञ्चदश्यो र्यदन्तरम् ॥१४१॥

पूर्णिमा[1] पौर्णमासी[2] स्यात्, राका[1] पूर्णे क्षपाकरे ।
कलाहीने त्वनुमति[1], मार्गशीर्षा[1] ऽऽग्रहायणी[2] ॥१४२॥

अमावास्या[1] त्वमावासी[2], सूर्येन्दुसङ्गम[3] स्तथा ।
अमावस्या[4] च दर्शो[5] ऽमा[6]-ऽमावासी[7] कथिता बुधैः ॥१४३॥

सा नष्टेन्दु: कुहु:[1] प्रोक्ता, कुहू[2] श्चापि निगद्यते ।
सचन्द्रिका सिनीवाली[1], भूतेष्टा[1] तु चतुर्दशी[2] ॥१४४॥

## ❀ मासनामानि ❀

द्विपक्षौ मास[1] आख्यात:, वर्षकोशो[2]ऽपि कथ्यते ।
वर्षांशको[3]ऽपि मासार्थे, दिनमल[4]श्च प्रयुज्यते ॥१४५॥

## ❀ मासभेद: ❀

मार्गशीर्ष[1] स्सहा:[2] मार्गो[3], वत्सरादि[4] स्तथा सह:[5] ।
आग्रहायणिक[6] श्चैव, सहस्य[1] स्तु सहस्यवत्[2] ॥१४६॥

पौष[3] स्तैष[4] स्तु माघ[1]श्च, तपा[2] स्तु फाल्गुन[1] स्तथा ।
फल्गुनिक[2] स्तपस्य[3] श्च, फल्गुनाल[4] स्तपस्यवत्[5] ॥१४७॥

चैत्र[1]स्तु चैत्रिक[2] श्चैव, मधु[3]श्च फाल्गुनानुज[4] ।
कामसख[5] स्तथा मोह-निक[6] राध[1] स्तु माधव[2] ॥१४८॥

उच्छुर[3] श्चैव वैशाखे[4], ज्येष्ठ[1] स्तु खरकोमल:[2] ।
मल[3] शुक्र[4] स्तथा ज्येष्ठा-मूलीय:[5] खरक[6] स्तथा ॥१४९॥

अथाऽऽषाढ:[1] शुचि[2] श्चापि, श्रावण[1] स्तु नभा[2] स्तथा ।
श्रावणिको[3]ऽथ भाद्र[1] श्च, भाद्र[2]-प्रौष्ठ[3] पर: पद: ॥१५०॥

नभस्य[४] स्यादिष[१] श्चाश्वि-युज[२] आश्विन[३] उच्यते ।
अथ कार्त्तिकिकः[१] सैरी[२], कार्त्तिकः[३] कौमुद[४] स्तथा ॥१५१॥

बहुलो[५]-र्जौ[६]च नामानि, प्रोक्तानि कोविदैं समैः ।
द्वौ द्वौ मासौ च एकर्तु, र्मार्गादितः क्रमाद् भवेत् ॥१५२॥

हिमागम[१] स्तु हेमन्तो[२], रौद्र[३] श्च प्रसल[४] स्तथा ।
शैष[१] स्तु शिशिर[२] श्चैव, वसन्त[१] स्तु बलाङ्गकः[२] ॥१५३॥

इष्य[३] श्च पुष्पकालस्तु[४], सुरभिः[५] पिकबान्धवः[६]।
पुष्पसाधारण[७] श्चाथ, निदाग[१] ऊष्म[२] ऊष्मक[३] ॥१५४॥

उष्ण[४] ऊष्मायणो[५] ग्रीष्मः[६], पद्म[७] उष्णागम[८] स्तपः[९] ।
आखोर[१०] श्चैव वर्षा[१] तु, मेघागम[२] स्तपात्ययः[३] ॥१५५॥

मेघकाल[४] क्षरी[५] प्रावृट्[६], वरिषा[७] स्तु घनात्ययः[१] ।
शरद्[२] चैवा ऽयन[१] ज्ञेयं, शिशिराद्यै स्त्रिभिस्त्रिभिः ॥१५६॥

उत्तरायण[१] कालेन, संयुक्तं दक्षिणायनम् ।
स्यादेको वत्सरो[१] नाम्ना, वर्षं[२] संवत्सरं[३] शरत्[४] ॥१५७॥

तथाऽनुवत्सरो[५] ऽब्द[६] च, हायन[७] परिवत्सरः[८]।
उद्वत्सरः[९] समाः[१०] वत्स[११], संवत्[१२] च कथ्यते बुधैः ॥१५८॥

भवेत् पैत्रं[१] त्वहर्नक्तं, मासेनाब्देन दैवतम्[१] ।
सहस्रयुगलै र्दिव्यैः युगै स्याद् ब्राह्म[१]मेककम् ॥१५९॥

स्थिति-प्रलयकालात्म-कल्पौ नृणां तु तत्तथा ।
एकसप्ततिभि र्दिव्यै, युगै र्मन्वन्तरं[१] मतम् ॥१६०॥

कल्पान्त:[१] प्रलय:[२] कल्प:[3], परिवर्त्त[४] स्तथा क्षय.[५] ।
समगुप्ति[६] श्च संवर्त्तो[७], युगान्त[८] श्च जिहानक:[९] ॥१६१॥

संहार[१०] स्यादथत्काले, तदात्वं प्रतिपाद्यते ।
तज्जं सांदृष्टिकं[१] चैव, सांसृष्टिकं[२] फलं तथा ॥१६२॥

आयति[१] स्तूत्तार: काल, उदर्क:[१] स्याद् भविष्यद: ।

## * आकाशस्य नामानि *

आकाश[१] मम्बरं[२] चाऽभ्र[3],-मन्तरिक्षं[४] घनाश्रय:[५] ॥१६३॥

वियद्[६] विष्णुपदं[७] खञ्च[८],-द्यौ[९] दिवौ[१०] च मरुत्पथ:[११] ।
व्योमा[१२]ऽनन्तं[१३] विहाय[१४] श्च, पुष्करं[१५] गगनं[१६] नभ:[१७] ॥१६४॥

सुरा[१८]-भ्रो[१९]- ड्डुपथ[२०] श्चेति, नभो नामानि विंशति: ।

## * मेघनामानि *

घो[१] घनाघनो[२] नभ्राट्[3], तडित्वान्[४] मुदिरो[५] घन:[६] ॥१६५॥

जीमूतो[७] जलद[८] श्चा ऽभ्र[९], जलमुक्[१०] जलद[११] स्तथा ।
वारिमुक्[१२] वारिवाह[13] श्च, वारिधर[१४] श्च वारिद:[१५] ॥१६६॥

स्तनयित्नु[१६] श्च पर्जन्यो[१७], धाराधरो[१८] बलाहक:[१९] ।
नभोध्वजो[२०] जलधरो[२१], जलवाह[२२] श्च वार्मसि:[२३] ॥१६७॥

व्योमधूम[२४] स्तथा धूम-योनि[२५] श्चवारिवाहन.[२६] ।
कादम्बिनी[१] कालिका[२] वै, मेघमाला[3] निगद्यते ॥१६८॥

दुर्दिन[1] वार्दलं[2] चैव, ज्ञायतां मेघजं तमः ।
धारासम्पात[1] आसारः[2], महावृष्टि[3] स्तथैवच ॥१६९॥

ज्ञायतां वेगवान् वर्षो, वातास्तं वारि शीकरः[1] ।
वृष्टि[1] श्च वर्षणं[2] वर्षं[3], तदभाव स्त्ववग्रह[1] ॥१७०॥

अवग्राह[2] श्च वग्राहो[3], वग्रहः[4] कथ्यते बुधैः ।
मेघास्थिमिञ्जका[1] चैव, वर्षाबीजं[2] घनोपलः[3] ॥१७१॥

करक[4] स्तोयडीम्भो वै, बीजोदक[6] मिरावरम्[7] ।
मेघास्थिपुञ्जिका[8] चैव, मेघकफ[3] इराम्बरम्[10] ॥१७२॥

अम्बुघन[11] श्च नामानि, कथ्यन्ते किल पण्डितैः ।

## ※ दिङ्नामानि ※

आशा[1] चैव हरित्[2] काष्ठा[3], स्याद् दिक्[4] तथा ककुप्[5] किल ॥१७३॥

दिक् पूर्वा[1] तु तथा प्राची[2], स्यादऽपरेतरा[3] तथा ।
दक्षिणा[1] तु अवाची[2] स्या-दपाची[3] चोत्तरेतरा[3] ॥१७४॥

प्रतीची[1] पश्चिमा[2] तु स्याद्, पूर्वेतरा[3] तथैव च ।
उदीची[1] तूत्तरा[2] दिग् च, स्यादऽपाचीतरा[3] तथा ॥१७५॥

विदिक्[1] त्वपदिशं[2] चैव, प्रदिक्[3] च कथ्यते बुधैः ।
दिश्यं दिग्भववस्तुन्य- पाग[1] पाचीन[2] मेवस्यात् ॥१७६॥

उदीचीनं[1] मुदग्जात[2] प्राक् प्राचीनं[2] तथा भवेत् ।
स्यात् प्रत्यक्[1] तु प्रतीचीनं[2], तिर्यग्दिशां तु नाथकाः ॥१७७॥

इन्द्र[1] श्चाग्नि[2] र्यम[3] श्चैव, नैर्ऋतो[4] वरुण[5] स्तथा ।

वायु[6] स्तथा कुबेर[7] स्याद्, ईशान[8] श्च यथाक्रमम् ।।१७८।।
अथैन्द्री[1] तत्समाऽग्नेयी[2], याम्या[3] च नैर्ऋती[4] तथा ।

वारुणी[5] चापि वायव्या[6], कौबेरी[7] तदनन्तरम् ।।१७९।।
ऐशानी[8] चेति नामानि, कथ्यन्ते पण्डितैरिह ।

## * दिग्गजा *

ऐरावतो[1] दिग्गजोऽस्ति पुण्डरीक[2] श्च वामन[3] ।।१८०।।

कुमुद[4] श्चाऽञ्जन[5] श्चैव, पुष्पदन्त[6] स्तदन्तरम् ।
सप्तमः सार्वभौमो[7]ऽस्ति, सुप्रतीको[8]ऽष्टमस्तथा ।।१८१।।

इत्यष्टौ दिग्गजा. श्रेष्ठाः, कथ्यन्ते ज्ञानिभिः किल ।

## * इन्द्रनामानि *

इन्द्रो[1] हरि[2] रुपेन्द्र[3] श्च, वज्री[4] दुश्च्यवनो[5] वृषा[6] ।।१८२।।

बिडौजा[7] मघवान्[8] शक्र[9], पुरन्दर[10] श्च वासवः[11] ।
आखण्डल[12] सहस्राक्षः[13], सुत्रामा[14]च सुरर्षभ.[15] ।।१८३।।

शुनासीरः[16] सुनासीरः[17] शतक्रतु[18] र्वरक्रतु[19] ।
वास्तोष्पति[20]स्तथा दलिमः[2] ,कौशिको[22] मेघवाहनः[23]।।१८४।।

तुराषाट्[24] यामनेमि[25]श्च, तपस्तक्षो[26] ऽच्युताग्रजः[27] ।
पृतनाषाट्[28] मरुत्वान्[29]वै, पर्जन्य.[30] पूर्वदिक्पतिः[31] ।१८५।

पौलोमीश [32] सुखा काङ्क्षी[33], सचीपति [34] स्वर्गपतिः[35] ।
सुरेश[36] श्च सुरस्त्रीश [37], नाकेशो[38] ऽसन्महा[39] तथा ॥१८६॥

शचीश[40]श्च शपीवि[41]श्च, वराणो[42] वज्रदक्षिण [43] ।
नेरी[44] सहस्रनेत्र[45] श्च, वन्दीकः[46] देवदुन्दुभिः[47] ॥१८७॥

उग्रधन्वा[48] जयो[49] जिष्णु[50], पुरुहूतो[51] ऽपरःपति[52] ।
खदिरो[53] ऽपि किणालात [54],
खिदिरो[55] मिहिर[56]स्तथा ॥१८८॥

ऋभुक्षाः[57] बाहुदन्तेय [58], त्रायस्त्रिंशपति[59] स्तथा ।
वयुनो[60] गौरवास्कन्दी[61], हर्यश्वो[62] हरिमान्[63] तथा ॥१८९॥

नरी[64] प्राचीनबर्हि[65] श्च, वृद्धश्रवा[66]स्तथैव च ।
प्राचीशः[67] पूर्वदिक् स्वामी[68], सक्रन्दन स्तथैव[69]च ॥१९०॥

इन्द्रवाचक नामानि, ज्ञातव्यानि बुधै र्जनैः ।
इन्द्रस्य तु द्विषः पाक[1] पुलोमा[2] नमुचि[3] स्तथा ॥१९१॥

वृत्रो[4] वलो[5] ऽद्रयो[6] जम्भो[7]-विख्याता इन्द्र शत्रव ।
इन्द्रस्य तु प्रियेन्द्राणी[1], पौलोमी[2] जयवाहिनी[3] ॥१९२॥

शतावरी[4] महेन्द्राणी[5], चारुधारा[6] शची[7] तथा ।
शक्राणी[8] चापि ज्ञातव्या, तनयस्तु जय[1] स्तथा ॥१९३॥

जयन्तो[2] जयदत्त[3] श्च, सुता[1] तु तविषी[1] पुनः ।
जयन्ती[2] तविषी[3] तिस्रो, हय उच्चैः श्रवा[1] महान् ॥१९४॥

मातलि.[1] सारथि स्तस्य, द्वितीयोऽस्ति हयकष[2] ।
द्वा:स्थ स्तु देवनन्दो[1] वै, ऐरावणो[1] गज. पुन ॥१९५॥

ऐरावतो[2]ऽभ्रमातङ्गो[3], हस्तिमल्लो[4] ऽभ्रमुप्रिय[5] ।
श्वेतगज[6] श्चतुर्दन्त[7], तथाऽर्कसोदरो[8] गज ॥१९६॥

वैजयन्त[1] स्तु प्रासादः, वैजयन्तो[1] ध्वज स्तथा ।
पुर्यमरावती[1] ज्ञेया, नामापरं सुदर्शनम्[2] ॥१९७॥

सरो नन्दीसर[1] स्तस्य, सुधर्मा[1] तु सभा भवेत् ।
वनं तु नन्दनं[1] ज्ञेय, वृक्षाश्च हरिचन्दन·[1] ॥१९८॥

मन्दार[2] पारिजात[3] श्च, सन्तान[4] श्चापि कल्पक·[5] ।
धनु र्देवायुधं[1] ज्ञेयं, तद्दजु रोहितं[1] तथा ॥१९९॥

दीर्घज्वैरावतं[1] चैव, स्याद्द वज्रं[1] त्वशनि.[2] स्वरु[3] ।
दम्भोलि[4] र्ह्लादिनी[5] शंव[6], शतकोटि[7] स्तथा पवि[8] ॥२००॥

शतार:[9] शतधार[10] श्च, व्याधाम·[11] कुलिश[12] स्तथा ।
भिदु[13] श्च भिदुरं वज्र-ज्वाला तु अतिभी[1] र्भवेत् ॥२०१॥

स्फुर्जथु[1] र्वज्रनिर्घोष:-पण्डितेन निगद्यते ।
स्ववैद्या वश्विनौ[2] दस्रौ[3], नासिक्यौ[4] वडवासुतौ[5] ॥२०२॥

नासत्या[6]वाश्विनौपुत्रौ[7], तथा प्रवरवाहनौ[8] ।
यमौ[9] नासत्यदस्रौ[10]वै गदान्तकौ[11] तथा ऽर्कजौ[12]॥२०३॥

अब्धिजौ[13] आश्विनेयौ[14] च, ज्ञेयौ यज्ञवहौ[15] तथा ।
त्वष्टा[1] तु विश्वकर्मा[2] च, विश्वकृद्[3] देववर्द्धकि.[4] ॥२०४॥

स्वर्गिवध्व[1] स्तु स्वर्वध्व.[2], स्वर्गस्त्रिय [3] सुरस्त्रिय.[4] ।
अप्सरसो[5] ऽप्सरा[6] श्चापि, स्वर्वेश्या[7] उर्वशीमुखाः ॥२०५॥

हाहादय स्तु गान्धर्वा[1], गन्धर्वा[2] देवगायना.[3] ।

## ❋ यमराजनामानि ❋

यमराजो[1] यम [2] कालो[3], यमराट्[4] यमुनाग्रज.[5] ॥२०६॥

दक्षिणाशापति[6] र्मृत्युः[7], कालकूट[8] स्तथा ऽन्तकः[9] ।
श्राद्धदेवो[10] ऽर्कतनु[11]श्च, कालिन्दीसोदर[12] स्तथा ॥२०७॥

धर्मराजो[13] महासत्य [14], शमनो[15] महिषध्वज.[16] ।
कीनाशो[17] वै कृतान्त[18] श्च, हरि[19] र्दण्डधर[20] स्तथा ॥२०८॥

शीर्णाहि[21] श्चापि शीर्णाङ्घ्रि[22], पुराणान्त[23] स्तथैव च ।
समवर्ती[24] यमश्चापि, धूमोर्णा[1] तु यमप्रिया ॥२०९॥

पुरी संयमिनी[1] तस्य, प्रतीहार स्तु वैध्यत [1] ।
दास स्तस्य महाचण्डः[1], चण्ड[2] स्तथा यमस्य वै ॥२१०॥

लेखक स्तु पुन र्ज्ञेय , चित्रगुप्ता[1]भिध किल ।

## ❋ राक्षसनामानि ❋

राक्षस[1] आक्षरो[2] रक्ष [3], कीनाश [4] कौणप[5] स्तथा ॥२११॥

क्रव्याद [6] कर्बर.[7] क्रव्यात्[8], रक्तग्रीव[9] श्च नैऋत [10] ।
पुण्यजन,[11] पलाद[12] श्च, हनुषो[13] निकसात्मज.[14] ॥२१२॥

नैकसेय[15] खसापुत्र[16], यातुधान[17] पलप्रियः[18] ।
त्रिशिरा[19] स्तब्धसंभार[20] रात्रिबल[21] प्रवाहिक[22] ॥२१३॥

यातु[23] संध्यावल[24] शङ्कुः[25], उद्धरो[26] जललोहितः[27] ।
रात्रिञ्चरो[28] नृचक्षा[29] श्च, विधुर[30] समितीपदः[31] ॥२१४॥

रात्रिचर[32] स्तथा ऽसृक्पः[33], स्यादिति नरविष्वणः[34] ।

## ❋ वरुणदेवनामानि ❋

वरुणो[1] जलकान्तार[2], प्रचेता[3] श्च परञ्जन[4] ॥२१५॥

अर्णवमन्दिर[5] पाशी[6], प्रतीचीश[7]श्च सवृत[8] ।
उद्दामो[9] जलाकन्तार[10], मेघनाद[11]श्च दुन्दुभि[12] ॥२१६॥

यादःपति[13] रपांनाथ[14], ज्ञेयाः जलपति[15] स्तथा ।

## ❋ कुबेरनामानि ❋

कुबेरो[1] धनदः[2] श्रीद[3], नृधर्मा[4] नरवाहनः[5] ॥२१७॥

कैलासौका[6] निधानेशः[7], किंनरेशो[8] निधीश्वर[9] ।
राजराजो[9] महासत्वः[10] धनकेलिः[11] धनेश्वर[12] ॥२१८॥

वैश्रवण[13] श्च वित्तेशः[14], हर्यक्षः[15] सत्यसङ्गरः[16] ।
पौलस्त्यः[17] परिविद्ध[18] श्च, कुहः[19] किंपुरुषेश्वरः[20] ॥२१९॥

तथा मनुष्यधर्मा[21] वै, रत्नगर्भः[22] सितोदरः[23] ।
त्रिशिराः[24] सुप्रसन्न[25] श्च, यक्षो[26] यक्षेश्वर[27] स्तथा ॥२२०॥

गुह्यकेश[२८] श्च गुह्येश.[२९], प्रमोदित[३०] स्सितोदर [३१] ।
ऐलवि[३२]लैकपिङ्गौ[३३] वै, रत्नकर:[३४] पिशाचकी[३५] ॥२२१॥

इच्छावसु[३६] रीशसख:[३७], सन्ति नामानि शास्त्रके ।
विमानं पुष्पकं[१] तस्य, वनं चैत्ररथं[२] तथा ॥२२२॥

पुरी वस्वौकसारा[१] च, वसुप्रभा[२] ऽलका[३] तथा ।
वसुसारा[४] प्रभा[५] चोक्ता, पुत्रोऽस्ति नलकूबर: ॥२२३॥

ज्ञेय. कुबेरदेवस्य, इत्येवं कथितं बुधै: ।

※ धननामानि ※

धनं[१] वित्तं[२] तथा द्रव्यं[३], द्रविणं[४] विभवो[५] वसु[६] ॥२२४॥

पृक्थ[७]-मृक्थं[८] च रिक्थं[९] स्वं[१०],स्वापतेयं[११] च रा[१२] स्तथा ।
ऋक्ण[१३]-मर्थो[१४] हिरण्य[१५] स्याद्,
सारं[१६] द्युम्नं[१७] तथोच्यते ॥२२५॥

※ निधाननामानि ※

निधानं[१] तु कुनाभि[२] श्च, शेवधि[३] र्निधि[४] रित्यपि ।

※ निधिभेदा: ※

महापद्म[१] स्तथा पद्म:[२], शङ्ख[३]-मकर[४]-कच्छपा [५] ॥२१६॥

मुकुन्द[६] कुन्द[७]-नीलौ[८] च, चर्चा[९] श्च निधयो नव ।

※ जैनमतानुमार निधिनाम ※

नैसर्प:[१] पाण्डुक [२] श्चैव, पिङ्गल [३] सर्वरत्नक [४] ।।३२७॥

महापद्म[५] स्तथा कालो:[६]: महाकाल[७] श्च माणव.[८] ।
शङ्खक[९] स्चेति नामानि, निधयो नव संख्यया ।।२२८।।

जैनमतानुसारेण, कथ्यते ज्ञानिभि· किल ।

※ यक्षनामानि ※

राजा[१] पुण्यजनो[२] यक्ष[३], वटवासी[४] च गुह्यकः[५] ।।२२९।।

※ किन्नरनामानि ※

किन्नर[१] स्तु किम्पुरुष[२], तुरङ्गवदनो[३] मयुः[४] ।

※ शिवनामानि ※

शिव·[१] शम्भु[२] वृषाङ्क[३] श्च, रुद्रः[४] शर्व[५] श्च शङ्कर[६]।।२३०।।

श्रीकण्ठो[७] नीलकण्ठ[८] श्च, गिरीशो[८] गिरिशो[९] हर.[१०] ।
ईश[११] ईश्वर[१२] ईशान[१३],
भीमो[१४] भर्ग[१५] श्च धूर्जटिः[१६] ।।२३१।।

अस्थिधन्वा[१७] जगत्स्रष्टा[१८], वह्निरेता.[१९] महाव्रती[२०] ।
दिग्वासा.[२१] कृत्तिवासा[२२] श्च,कपर्दी[२३] पांशुचन्दनः[२४]।।२३२।।

उड्डीशः[२५] ऊर्ध्वलिङ्ग[२६] श्च, विरूपाक्षो[२७] विषान्तक.[२८] ।
महाकान्तो[२९] महानादः[३०],सिताङ्ग[३१] स्त्रिपुरान्तक.[३२] ।।२३३।।

शैलधन्वा[३३] विशालाक्षो[३४], महादेवो[३५] महेश्वरः[३६] ।
शूल[३७]-खट्वाङ्ग[३८]-गङ्गा[३९]-ऽही[४०]-
न्दु[४१]-कपाल[४२]-पिनाक[४३]भृत् ।।२३४।।

गजा[४४]-ऽनङ्गा[४५]-पुरा[४६]-पूषा-[४७]
काला[४८]-ऽन्धका[४९]-मखा[५०]सुहृत् ।
अर्धकालो[५१] जगद्द्रोणि[५२], कोणवादी[५३] नृवेष्टन.[५४] ॥२३५॥

अन्धकारि:[५५] अहिर्बुध्न[५६], समिरो[५७] धर्मवाहन:[५८] ।
षण्ढ:[५९] श्मशानवेश्मा[६०]वै, सर्वज्ञो[६१] वृषलाञ्छन.[६२] ॥२३६॥

क्षिपिविष्टो[६३] ऽष्टमूर्ति[६४] श्च, घना[६५]-ऽब्द[६६]वाहनौ मृड[६७] ।
भाल[६८]दृगेकपात्[६९]त्रिदृक्[७०], महानादो[७१]दशाव्यय:[७२] ॥२३७॥

अनेकलोचनो[७३] ध्रूम[७४], नाट्यप्रियो[७५] महानट[७६] ।
खण्डपर्शु[७७] नराधार:[७८], दिशांप्रियतम[७९] स्तथा ॥२३८॥

कटाटङ्क[८०] कटप्रू[८१] श्च, कूटकृद्[८२] कपिलाञ्जन[८३] ।
कण्ठेकालो[८४] ऽहिपर्यङ्क[८५], मिहिराणो[८६]महाम्बक[८७]॥२३९॥

योगी[८८] जोटी[८९] च जोटीङ्ग[९०], भवो[९१] भूरि[९२]श्च भैरव.[९३] ।
उग्र.[९४]काल[९५] उलन्द[९६] श्च, रेरिहाणो[९७] जटाधर[९८]॥२४०॥

प्रमथ[९९]-पशु[१००]-भूतो[१०१]-मा-[१०२],पति पिङ्गेक्षण[१०३]स्तथा ।
पशु[१०४]-गण[१०५]-भूत[१०६]नाथ,
गोरीनाथ[१०७]स्तथा ऽतल[१०८] ॥२४१॥

शैलधन्वा[१०९] ऽट्टहासी च,[११०] कामध्वंसी[१११] च हृत्कर:[११२]।
शङ्कु[११३] पञ्चमुख:[११४] स्थाणु[११५],
यमजित्[११६] च मृत्युञ्जय:[११७] ॥२४२॥

हीरो[११८] हिरण्यरेता[११९] वै, तथा स्यादक्षतस्वन.[१२०] ।
कपर्दो[१] ऽस्य जटाजूट.[२], खट्वाङ्ग[१] स्तु सुखंसुण:[२] ॥२४३॥

तद्धनुः स्याद् पिनाकं[1] चा-ऽजकावा[2] ऽऽजगवौ[3] तथा ।
अजगाव[4] मपि प्रोक्त, ब्राह्म्याद्या. सप्त मातरः ॥२४४॥

ब्राह्मी[1] माहेश्वरी[2] सिद्धी[3], कौमारी[4] वैष्णवी[5] तथा ।
वाराही[6] चापि चामुण्डा[7], ज्ञेयाः सदैव मातरः ॥२४५॥

प्रमथाः[1] पार्षदा[2] स्तस्य, पारिषदाः[3] गणा. स्मृताः ।

❋ अष्टसिद्धिनामानि ❋

प्राकाम्यं[1] वशिते[2]शित्वं[3], लघिमा[4] महिमा[5] ऽणिमा[6] ॥२४६॥

यत्रकामावसायित्वं[7], प्राप्ति[8]रैश्वर्यमष्टधा ।

❋ पार्वतीनामानि ❋

पार्वती[1] तामसी[2] चण्डी[3], कुमारी[4] रेवती[5] जया[6] ॥२४७॥

मृडानी[7] बाभ्रवी[8] क्षेमा[9], जाङ्गुली[10] यादवी[11] वरा[12] ।
नकुला[13] नन्दिनी[14] नन्दा[15],
नन्दपुत्री[16] निरञ्जना[17] ॥२४८॥

सुनन्दा[18] नन्दयन्ती[19] वै, नीलवस्त्रा[20] घनाञ्जनी[21] ।
आर्या[22] कात्यायनी[23] दुर्गा[24],
प्रगल्भा[25] कृष्णपिङ्गला[26] ॥२४९॥

प्रकूष्माण्डी[27] च रुद्राणी[28], भवानी[29] सर्वमङ्गला[30] ।
अपर्णा[31] त्र्यम्बका[32] कृष्णा[33],
कौशिकी[34] गौतमी[35] शिवा[36] ॥२५०॥

सती[३७] शिवी[३८] च शर्वाणी[३९], सावित्री[४०] सिंहवाहना[४१] ।
निशुम्भमथनी[४२] शुम्भ-मथनी[४३] भूतनायिका[४४] ॥२५१॥

महिषमथनी[४५] भीमा[४६], गार्गी[४७] च गोकुलोद्भवा[४८] ।
बर्हिध्वजा[४९] जयन्ती[५०] वै, पुत्री[५१] क्षेमङ्करी[५२] प्रभा[५३]॥२५२॥

ह्रीरी[५४] हैमवती[५५] हासा[५६], विकराला[५७] यमस्वसा[५८] ।
महानिशा[५९] महारौद्री[६०], कालङ्गमा[६१] करालिका[६२] ॥२५३॥

कालरात्रि[६३] कुला[६४] लम्बा[६५] विलंका[६६] कुलदेवता[६७] ।
भद्रकाली[६८] महाकाली[६९], परमब्रह्मचारिणी[७०] ॥२५४॥

वरदा[७१] बदरीवासा[७२], दर्दुरा[७३] दक्षजा[७४] जया[७५] ।
अनन्ता[७६] स्कन्धमाता[७७] च,
पितृगणा[७८] ऽद्रिजा[७९] हिमा[८०]॥२५५॥

अमोधा[८१] च महाविद्या[८२], महामाया[८३] महाजया[८४] ।
एकानसी[८५] विशालाक्षी[८६], उमा[८७] मलयवासिनी[८८] ॥२५६॥

अष्टादशभुजा[८९] कुन्द्रा[९०], सिंहयाना[९१] कुहावती[९२] ।
ईश्वरा[९३] चेश्वरी[९४] मारी[९५], गोला शिखरवासिनी[९६] ॥२५७॥

मातृमाता[९७] च मैनाक-स्वसा[९८] कृष्णस्वसा[९९] स्मृता ।
वाहनं तु मनस्ताल:[१], पार्वत्या कथ्यते बुधैः ॥२५८॥
जया[१] च विजया[२] तस्या, सख्या नाम द्वयं स्मृतम् ।

※ चामुण्डानामानि ※

चामुण्डा[१] चर्ममुण्डा[२] च, चण्डमुण्डा[३] च चर्चिका[४] ॥२५९॥

महाचण्डी[५] महागन्धा[६], तथा मार्जारकर्णिका[७] ।
भैरवी[८] कर्णकोटी[९] च, प्रोक्ता बुधै कपालिनी[१०] ॥२६०॥

## ❊ गणेशनामानि ❊

गणेश[१] श्च गजास्य श्च[२], विषाणान्तो[३] विनायकः[४] ।
विघ्नेशो[५] विघ्नराज[६] श्च, हेरम्ब.[७] प्रमथाधिप.[८] ॥२६१॥

एकदन्तो[९] द्विशरीरो[१०]:, द्वैमातुर[११] स्त्रिधातुक.[१२] ।
पृश्निगर्भ[१३] स्तथा पृश्नि-
शृङ्गो[१४] लम्बोदरा[१५]ऽऽखुगो[१६]॥२६२॥

पर्शुपाणि[१७] स्तथा हस्ति-मल्ल[१८] श्चेति स्मृतं किल ।

## ❁ स्कन्दनामानि ❁

स्कन्द[१] स्वामी[२] च सेनानीः[३], पार्वतीनन्दन[४] स्तथा ॥२६३॥

सिद्धसेनो[५] महासेनः[६], षण्मुख[७] स्तारकान्तकः[८] ।
शक्तिभृत्[९] शक्तिपाणि[१०]श्च,
क्रौञ्चारि.[११]क्रौञ्चदारणः[१२]॥२६४॥

अग्निभू[१३] अग्निजन्मा[१४] वै, गङ्गो[१५]-मा[१६]-कृत्तिकासुतः[१७] ।
शरभू[१८] शरजन्मा[१९] च, ब्रह्मचारी[२०] दिगम्बर:[२१] ॥२६५॥

तारकारि[२२] महातेजा[२३], कुमारः[२४] करवीरकः[२५] ।
गाङ्गेयो[२६] बालचर्य[२७] श्च, वैजयन्तो[२८] दिवाकरः[२९]॥२६६॥

द्वादशाक्ष[30] स्तथा बाहु-लेय[31] श्च शिखिवाहनः[32] ।
षाण्मातुरो[33] विशाख[34] श्च,
स्याद् मयूररथो[35] गुहः[36] ॥२६७॥

## ❋ शिवभृङ्गीगणादिनामानि ❋

भृङ्गिरिटी[1] च भृङ्गी[2] वै, चर्मी[3] भृङ्गीरिटि[4] स्तथा ।
नाड्य[5]-स्थि[6] विग्रहो चोक्तः, पुन कूष्माण्डका[1]भिधः ॥२६८॥

केलिकिल[2] स्तथा प्रोक्तो, नन्दिश[1] स्तण्डु[2]-नन्दिनौ[3] ।
शङ्करस्य गणाश्चैते, कथिता पण्डितैः किल ॥२६९॥

## ❋ ब्रह्मणो नामानि ❋

ब्रह्मा[1] चतुर्मुख.[2] शम्भुः[3], स्रष्टा[5] शतधृति[6] ध्रुव[7] ।
विश्वरेताः[8] जगत्कर्त्ता[9], पितामहः[10] प्रजापति.[11] ॥२७०॥

विधि[12] र्वेधाः[13] विधाता[14] वै, वेदगर्भः[15] पुराणग.[16] ।
भवान्तकृत्[17] स्वयम्भू[18] श्च, सनत्[19] सरोरुहासनः[20] ॥२७१॥

स्थविर[21] श्च शतानन्द.[22], सात्त्विकः[23] कमनः[24] कविः[25] ।
द्रुहिणो[26] द्रुघणो[27] धाता[28],
नाभिजन्मा[29] विरिञ्चनः[30] ॥२७२॥

कश्च[31] कमलजन्मा[32] च, नाभिभू[33] पद्मभू[34] स्तथा ।
आत्मभूः[35] आत्मयोनि[36] श्च, पुरुषः[37] पुरुषासनः[38] ॥२७३॥

श्वेतपत्त्ररथ[३९] श्चापि, हिरण्यगर्भ[४०]-हंसगौ[४१] ।
विरिञ्च[४२] श्च विरिञ्चि[४३] र्वै,
विरञ्चि[४४] श्चापि विश्वसृट्[४५] ॥२७४॥

क्षेत्रज्ञ[४६] श्चापि लोकेश:[४७], सुरज्येष्ठ[४८] स्तथैव च ।
अजो[४९] ऽष्टश्रवण[५०] श्चेति, सन्ति नामानि ब्रह्मण: ॥२७५॥

### ※ विष्णुनामानि ※

विष्णु[१] र्जिष्णु[२] र्जगन्नाथो[३], जह्नु[४], र्बभ्रु[५] श्चतुर्भुज:[६] ।
अक्षजो[७] ऽधोक्षजो[८] मार्जो[९]
विधु[१०] र्जिनो[११] जनार्दन:[१२] ॥२७६॥

तार्क्ष्यध्वज:[१३] शतावर्त्तो[१४], जलशयो[१५] जलेशय:[१६] ।
धीरो[१७] ब्धिशयनो[१८] धन्वी[१९],
सुधन्वा[२०] विष्टरश्रवा:[२१] ॥२७७॥

उपेन्द्र:[२२] पुण्डरीकाक्ष:[२३], पुरुष:[२४] पुरुषोत्तम:[२५] ।
पीताम्बर[२६] पराविद्ध[२७], पुराणपुरुष[२८] स्तथा ॥२७८॥

श्रीपति:[२९] पद्मनाभ[३०] श्च, पुण्यश्लोको[३१] ऽपराजित:[३२] ।
एकपाद्[३३] द्विपद[३४] स्त्रिपाद्[३५], तीर्थपाद[३६] पराक्रम:[३७] ॥२७९॥

श्रीगर्भ:[३८] श्रीधर:[३९] सोम[४०], श्रीवत्स:[४१] श्रीकर[४२] स्तथा ।
श्रीवराहो[४३] वृषोत्साह:[४४], श्रीवत्साङ्क[४५] सरीसृप[४६] ॥२८०॥

नवशक्ति[४७] र्नवव्यूह[४८], चतुर्व्यूह:[४९] सुयामुन:[५०] ।
आसन्द[५१] श्च शतानन्द:[५२], नारायणो[५३] नरायण:[५४] ॥२८१॥

अजितो[५५] देवकीसूनुः[५६], सुषेणः[५७] पांशुजालिकः[५८]।
खण्डास्यो[५९] जितमन्यु[६०] श्च, सुवृषः[६१] समितिञ्जयः[६२] ॥२८२॥
षड्‌विन्दु[६३] र्योगनिद्रालु[६४], वृषाक्षो[६५] वायुवाहनः[६६]।
वर्द्धमानो[६७] वरारोहो[६८], रन्तिदेवो[६९] वृकोदरः[७०] ॥२८३॥
यदुनाथो[७१] गदा[७२]-चक्र[७३]- शार्ङ्ग[७४]-श्रीवत्स[७५]-शङ्खभृत्[७६]।
दशार्हः[७७] केशव[७८] कृष्णः[७९],
विश्वभुग्[८०] शिवकीर्तनः[८१] ॥२८४॥
हृषीकेशो[८१] महाहंसः[८२], बहुरूपो[८३] महाक्रम[८४]।
बहुशृङ्गो[८५] वरारोहो[८६], महामायो[८७] महातपाः[८८] ॥२८५॥
हरिः[८९] सौरिः[९०] हृषीकेशः[९१],
शौरिः[९२] सोम[९३] स्वभू[९४] स्थिरः[९५]।
पुनर्वसुः[९६] शतावर्त्तः[९७], शद्रु[९८] र्वंश[९९] सुयामुन[१००] ॥२८६॥
अहि[१०१] रिन्द्रानुजो[१०२] ऽज[१०३] श्च,
पद्मेशयो[१०४] वृषाकपिः[१०५]।
ऊर्ध्वकर्मा[१०६] महामायः[१०७], उरुगाय[१०८] उरुक्रम[१०९] ॥२८७॥
वैकुण्ठः[११०] कालकुण्ठ[१११] श्च, विष्वक्सेनो[११२] महीधरः[११३]।
धर्म[११४]-लोक[११५]-ब्रह्म[११६]नाभाः,
सूक्ष्मनाभः[११७] सुरोत्तम[११८] ॥२८८॥
माधवो[११९] वासुदेव[१२०] श्च, मुञ्जकेशी[१२१] कुमोदकः[१२२]।
तमोघ्न[१२३] श्च चतुर्दंष्ट्र[१२४],
त्रिधामा[१२५] ऽपि त्रिविक्रमः[१२६] ॥२८९॥

अच्युत[127] आत्मभू[128] श्चैव, यज्ञनेमि[129] र्बलिन्दम[130] ।
शश[131]-सुवर्णबिन्दू[132] वै, वासवावरज[133] स्तथा ॥२९०॥

लोहिताक्षो[134] लतापर्ण.[135],
गोपेन्द्रो[136] ऽसंयुतो[137] ऽव्ययः[138] ।
गोवर्धनधरो[139] वेधा[140],
धार[141] श्च धरणीधरः[142] ॥२९१॥

लतापर्णो[143] लतावर्ण[144], कपिलः[145] पाण्डवायनः[146] ।
पृश्निशृङ्ग.[147] शरु.[148] शार्ङ्गी[149],
गरुडाङ्को[150] गदाधर.[151] ॥२९२॥

दामोदरो[152] मुकुन्द[153] श्च, क्रतुधामाऽ[154] प्यधोमुख.[155] ।
आसादः[156] सोमसिन्धु[157] श्च,
शलिकः[158] शिलिकाजित.[159] ॥२९३॥

तीर्थपाद[160] स्तथा लक्ष्मी-नाथ[161] श्चक्रपाणि.[162] कपिः[163]।
पद्मगर्भ[164] स्तथा भद्र-कपिल[165] श्च प्रमर्दनः[166] ॥२९४॥

पृश्निगर्भ[167] श्च हिरण्य-केशो[168] यज्ञधर[170] स्तथा ।
एकाङ्ग[171] एकशृङ्ग[172] श्च,
विश्वम्भरो[173] जलेशय[174] ॥२९५॥

सुभद्रो[175] वासुभद्र[176] श्च, विश्वरूप[177] स्तथैव च ।
वनमाली[178] सदायोगी[179], यवनारि[180] रुदाहृत ॥२९६॥

पुन र्हिरण्यनाभ[181] श्च, रुद्रकपिलनामक.[182] ।
लक्ष्मीनाथः[183] स एवास्ति, विष्णुनामानि चिन्तयेत् ॥२९७॥

मधु[१] र्मन्दो[२] मुर:[३] केशी[४], हिरण्यकशिपु[५] बलि:[६] ।
अरिष्ट.[७] शिशुपाल[८] श्च, द्विविदो[९] यमलार्जुनौ[१०] ।।२९८।।

कैटभ:[११] कालिय[१२] कंस:[१३], नरक.[१४] शकट[१५] स्तथा ।
पूतना[१६] कालनेमि[१७] श्च, हयग्रीव[१८] श्च धेनुक:[१९] ॥२९९॥
राहु[२०] साल्व[२१] श्च चाणूरो[२२], बाणो[२३] वध्योऽस्य मन्यते ।
वाहनं वैनतेय[१] स्तु, शङ्खो ऽस्य पाञ्चजन्यक:[१] ॥३००॥

श्रीवत्स[१]नामकोऽङ्कस्तु, कृपाणोऽस्यास्ति नन्दक[१] ।
कौमोदकी[१] गदा विष्णो, ज्ञेया कौपोदकी[२] तथा ॥३०१।

चापं शार्ङ्गं तु विष्णो स्यात्, तथा चक्रं सुदर्शन:[१] ।
स्यमन्तको[१] मणि र्हस्ते, भुजमध्ये च कौस्तुभ:[१] ।।३०२।।

पिता तु वसुदेवो[१] ऽस्य, स एवानकदुन्दुभि[२] ।
दिन्दु[३] भूकश्यप[४] श्चेति, कथ्यते कोविदै सदा ।।३०३।।

❋ बलदेवनामानि ❋

बलदेवो[१] बलो[२] राम:[३], बलभद्रो[४] बली[५] हली[६] ।
प्रलापी[७] कामपाल[८] श्च सात्वतो[९] ऽपि सितासित:[१०] ।।३०४।।

मुसली[११] ताललक्ष्मा[१२] च, कालिन्दीकर्षण[१३] स्तथा ।
भद्रचलन[१४]-भद्राङ्गौ[१५], प्रलम्बघ्न[१६] प्रलम्बभिद्[१७]।।३०५।।

अनन्तो[१८] नीलवस्त्र[१९] श्च, सङ्कर्षणौ[२१]-ककुण्डलौ[२२]।
यमुनाभित्[२३] तथा फाल[२४],
रुक्मिभिद्[२५] रुक्मिदारण:[२६]।।३०६।।

पौर.[27] प्रियमधु[28] र्गुप्त-चरो[29] ऽच्युताग्रज[30] स्तथा ।
रेवतीश[31] स्तथा रौहि-णेयः[32] शेषाहिनामभृत्[33] ॥३०७॥

इत्येवं बलदेवस्य, नामानि कथितानि वै ।
सौनन्दं[1] मुसलं त्वस्य, ज्ञेयं संवर्तकं[1] हलम् ॥३०८॥

※ लक्ष्मीनामानि ※

लक्ष्मी[1] र्मा[2] सा[3] रमा[4] पद्मा[5], पद्मवासा[6] हरिप्रिया[7] ।
इन्दिरा[8] कमला[9] ता[10] श्री.[11],
ई[12] श्रा[13] क्षीराब्धिमानुषी[14] ॥३०९॥

भर्मरी[15] विष्णुशक्ति.[16] स्यात्, क्षीरोदतनया[17] तथा ।

※ कामदेवनामानि ※

अथ काम.[1] कलाकेलिः[2], कमन[3] श्च शमान्तक[4] ॥३१०॥

शिखिमृत्यु[5] र्मनोदाही[6], मथनो[7] मन्मथः[8] स्मर.[9] ।
मदनो[10] यौवनोद्भेद[11] प्रद्युम्नः पुष्पकेतन.[13] ॥३११॥

अनन्यजो[14] ऽङ्गजो[15] ऽनङ्ग[16], दर्पको[17] विषमायुध[18] ।
रागरज्जु[19] र्जराभीरुः[20], सर्वधन्वी[21] प्रकर्षक.[22] ॥३१२॥

श्रीनन्दन[23] श्च कन्दर्प[24], मधुदीपो[25] महोत्सव[26] ।
कन्तु.[27] पुष्पध्वजो नाम[28] मार श्च[29] मधुसारथिः[30] ॥३१३॥

स्यान् मनसिशय[31] श्चेति, नामानि हृच्छयो[32] ऽपि च ।
इषु[1] श्चापं[2] तथा ऽस्त्रं[3] च, कामपुष्पादि कथ्यते ॥३१४॥

पुष्पास्त्र:[1] पुष्पचाप[2] श्च, पुष्पेषु:[3] कुसुमायुध[4] ।
तथा कुसुमधन्वा[5] वै, कुसुमवाण[6] संज्ञकः ॥३१५॥

अथ कामरिपु र्ज्ञेय, शवर.[1] शम्बर[2] स्तथा ।
शूर्पक[3] श्चापि प्रख्यात, शंवरा[1]रि स्ततोऽपि स ॥३१६॥

शम्बरा[2]रिः शूर्पकारि.[3], कामचिह्नं तु केतनम्[1] ।
मीन[2] श्च मकर[3] श्चापि, तस्मात् स मीनकेतन.[1] ॥३१७॥

मकरकेतन[2] श्चापि, स्याद् झष[3]-मकर[4]ध्वजौ ।
बाणा. पञ्च तु कामस्य, चूतं[1] नीलोत्पलं[2] तथा ॥३१८॥

अरविन्द[3]मशोकं[4] च, स्यात् तथा नवमल्लिका[5] ।
तस्मात् स पञ्चबाणोऽ[1]पि, विषमेषुश्च कथ्यते ॥३१९॥

कामस्य स्त्री रति[1] र्नाम्नी, तस्मात् रतिपति[1] र्भवेत् ।
ज्ञेयो रतिवर[2] श्चापि, योनि स्तवस्य मन[1] स्तथा ॥३२०॥

आत्मा[2] शृङ्गार[3]-संकल्पौ[4], तस्मात् चेतोभव[1] स्तथा ।
आत्मभू[2] रात्मयोनि[3] श्च, शृङ्गारयोनि[4] रुच्यते ॥३२१॥

तथा शृङ्गारजन्मा[5] च, संकल्पयोनि[6]संज्ञक ।
स्मृतिभू[7]श्च मनोयोनिः[8], कामसंज्ञा श्च यौगिका ॥३२२॥

काममित्र मधु[1] श्चैत्र.[2], तस्मात् चैत्रसख[1] स्तथा ।
मधुसुहृत्[2] च नामानि, कामस्य यौगिकानि च ॥३२३॥

स्यात् सुतोऽस्याऽनिरुद्धो[1] हि, उषारमण[2]संज्ञक. ।
ऋष्याङ्क.[3] ऋष्यकेतुश्च[4], उषेशो[5] ब्रह्मसू[6] रपि ॥३२४॥

## ❋ गरुडनामानि ❋

गरुड[1] श्च गरुत्मान्[2] वै, कामायु.[3] काश्यपि[4] स्तथा ।
सौपर्णेय:[5] सुपर्ण[6] श्च, वज्रिजिद्[7] विष्णुवाहनम्[8] ॥३२५॥

अरुणावरज[9] स्तार्क्ष्यो[10], महापक्षो[11] विषापहः[12] ।
उन्नीतशः[13] शिलाऽनीह[14],
स्वर्णकायो[15] विशालक:[16] ॥३२६॥

पक्षिसिंह[17] सुधाहृत्[18] च, पक्षिस्वामी[19] तथा ऽहिभुक्[20] ।
स्वमुखभू[21] र्महावेग:[22], शाल्मली[23] गरुल[24] स्तथा ॥३२७॥

वज्रतुण्डा[25]ह्वय श्चैव, वैनतेय[26] स्तथैव च ।
सर्पाराति[27] श्च नामानि, ज्ञेयानि गरुडस्य वै ॥३२८॥

## ❋ बुद्धनामानि ❋

बुद्धो[1] बौद्धो[2] बुधो[3] बोधि[4], र्महाबोधि[5] स्त्रिकालवित्[6] ।
बोधिसत्त्वो[7] महासत्त्वो[8], दशपारमिताधर.[9] ॥३२९॥

संगुप्त:[10] सुगतो[11] योगी[12], खजिद् विज्ञानमातृक.[13] ।
आर्य[14] श्चाऽर्हन्[15] दशार्ह[15] श्च,
शास्ता[16] विज्ञानदेशन:[17] ॥३३०॥

षडभिज्ञ[18] श्चतुस्त्रिंश-ज्जातकज्ञ[19] स्तथागत.[20] ।
जिन:[21] समन्तभद्र[22] श्च, दशार्ह.[23]श्रीघना[24]ऽद्वयौ[25]॥३३१॥

सिद्धार्थो[26] विगतद्वन्द्व:[27], लोकनाथ:[28] सुनिश्चित.[29] ।
लोकजित्[30] मारजित्[31]चैव,त्रिकाय[32] श्च तथागत:[33] ॥३३२॥

पञ्चज्ञानो[३४] महामैत्रो[३५], मुनीन्द्र[३६]श्च विनायक.[३७] ।
धर्मधातु[३८] र्दयाकूर्चो[३९], भगवान्[४०] दशभूमिग[४१] ॥३३३॥

धर्मराज[४२] श्च नामानि, बुद्धस्य कथितानि वै ।
तथे वेमानि नामामि, विपश्यी[१] च शिखी[२] तथा ।
विश्वभू[३] श्च ककुच्छन्द:[४], काञ्चन:[५] काश्यप[६] स्तथा ॥३३४॥

नामावल्यां शाक्यसिंह:[१], मायासुतो[२] ऽर्कबान्धव:[३] ।
शुद्धोदनसुत.[४] शाक्यो[५], देवदत्ताग्रज[६] स्तथा ॥३३५॥

राहुलसू[७] श्च सर्वार्थ-सिद्ध[८] श्च गोतमान्वय[९] ।
शौद्धोदनि[१०] श्च शाक्यस्य, नामानि दश सन्ति च ॥३३६॥

## ❋ असुरनामानि ❋

असुरा[१] दानवा[२] श्चैव, दैतेया[३] दितिजा[४] स्तथा ।
दनुजा.[५] पूर्वदेवा[६] श्च, पातालौक:[७]-सुरारय[८] ॥३३७॥

शुक्रशिष्या[९] श्च नामानि, ज्ञातव्यानि सदा बुधै: ।

## ❋ षोडश विद्यादेवीनामानि ❋

विद्यादेव्यास्तु नामानि, षोडश क्रमश स्त्वध. ॥३३८॥

रोहिणी[१] प्रज्ञप्ति[२] र्वज्र-शृङ्खला[३] कुलिशाङ्कुशा[४] ।
देवी चक्रेश्वरी[५] चैव, नरदत्ताभिधा[६] पुन ॥३३९॥

काली[७] देवी महाकाली[८], गौरीदेवी[९] तथैव च ।
गान्धारी[१०] चापि सर्वास्त्र-महाज्वाला[११] च मानवी[१२] ॥३४०॥

वैरोट्या[13] संज्ञका देवी, अच्छुप्ता[14] मानसी[15] तथा ।
महामानसिका[16] चेति, कथ्यन्ते ज्ञानिभिः किल ॥३४१॥

### ❊ सरस्वतीदेवीनामानि ❊

देवी सरस्वती[1] ब्राह्मी[2], श्रुतदेवी[3] च भारती[4] ।
वाग्[5] गी[6]र्वाणी[7] तथा गौ[8] श्च,
भाषा[9] च वचनं[1] तु वै ॥३४२॥

भाषितं[2] भणित[3] चैव, जल्पितं[4] लपितं[5] वचः[6] ।
व्याहार[7] श्चाभिधानं[8] स्या-दुदितं[9] गदित[10] तथा ॥३४३॥

### ❊ वाक्य-पदयो र्लक्षणम् ❊

सविशेषणमाख्यातं, वाक्यं[1] स्त्याद्यन्तकं पदम्[1] ।

### ❊ आगमनामानि ❊

आगम[1] श्चापि सिद्धान्त[2], राद्धान्त[3] समय[4] स्तथा ॥३४४॥

आप्तोक्ति[5] श्च कृतान्तो[6] वै, नामानि तु विशेषतः ।
आचाराङ्गा[1]ह्वयं सूत्र-कृत[2] थानाङ्गसंज्ञकम्[3] ॥३४५॥

चतुर्थं समवायाङ्गं[4], भगवत्यङ्ग[5]संज्ञकम् ।
ज्ञाताधर्मकथाङ्गं[6] वै, उपासका[7]ऽन्तकृद्दशा.[8] ॥३४६॥

अनुत्तरोपपातिक[9]-दशाङ्गं नवम तथा ।
प्रश्नव्याकरणाङ्गं[10] वै, विपाकाङ्गं[11] श्रुतं तथा ॥३४७॥

इति चैकादशाङ्गानि, उपाङ्गसहितानि हि ।
उपाङ्गानां तु नामानि, प्रथममौपपातिकम्[1] ॥३४८॥

द्वितीयं राजप्रश्नीय[2], जीवाभिगममित्यपि[3] ।
प्रज्ञापनाह्वयं[4] जम्बू-द्वीपप्रज्ञप्ति[5] रित्यपि ॥३४९॥

चन्द्रपज्ञप्त्युपाङ्गं[6] वै सूर्यप्रज्ञप्ति[7] रित्यपि ।
निरयावलिकोपाङ्गं[8], तथा कल्पावतंसिका[9] । ३५०॥

पुष्पिकासंज्ञकं[10] पुष्प-चूलिका[11] नामविद्यते ।
वृष्णिदशाभिधं[12] चेति, स्यादुपाङ्गानि चागमे ॥३५१॥

पुन द्वादशमङ्गं वै, दृष्टिवादाह्वयं किल ।
द्वादशाङ्गी[1] च प्रख्याता, गणिपिटक मित्यपि[2] ॥३५२॥

भेदा स्तु दृष्टिवादस्य, क्रमश पञ्चसंख्यकाः ।
परिकर्म[1] तथा सूत्रम्[2], पूर्वानुयोग[3] सञ्ज्ञकम् ॥३५३॥

पूर्वगतं[4] चतुर्थं स्यात्, पञ्चमः चूलिका[5] ऽभिधम् ।
पूर्वगते तु पूर्वाणि[1], चतुर्दश यथाक्रमम् ॥३५४॥

आद्यमुत्पादपूर्वं[1] चा-ऽग्रायणीयाह्वयं[2] तथा ।
वीर्यप्रवादपूर्वं[3] वै, अस्तिनास्तिप्रवादकम्[4] ॥३५५॥

ज्ञानप्रवादपूर्वं[5] वै, सत्यप्रवाद[6] सञ्ज्ञकम् ।
आत्मप्रवादपूर्वं[7] च, कर्मप्रवादपूर्वकम्[8] ॥३५६॥

प्रत्याख्यानप्रवादं[9] वै, विद्याप्रवादपूर्वकम्[10] ।
तथा कल्याणप्रवादं[11], प्राणावायप्रवादकम्[12] ॥३५७॥

क्रियाविशालपूर्वं[13] च, हि लोकबिन्दुसारकम्[14] ।
इत्येव कथितं शास्त्रे, ज्ञानिभि श्च महर्षिभि ॥३५८॥

## ❊ वेदनामानि ❊

वेदानां पञ्चनामानि, स्वाध्याय[1] श्च श्रुति[2] स्तथा ।
आम्नायो[3] नाम विख्यातं छन्दो[4] वेद[5] स्त्रयी पुनः ॥३५९॥

ऋग्वेद[1] श्च स्यजुर्वेद.[2], सामवेद[3] स्तृतीयक ।
चतुर्थोऽथर्ववेद स्तु, तस्मात् चत्वार एव ते ॥३६०॥

उपनिष[1]च्च वेदान्तो[2], वेदसारस्य नामनी ।
मन्त्रबीजञ्च, प्रख्यात-मोङ्कार-प्रणवा विमौ ॥३६१॥

षडङ्गानि तु वेदस्य, शिक्षा[1] च कल्पसंज्ञकः[2] ।
व्याकरणं[3] तथा छन्दो[4], ज्योति[5] र्निरुक्ति[6] रेव च ॥३६२॥

स्मृति[1] स्याद् धर्मशास्त्र[2] ञ्च, तथा च धर्मसंहिता[3] ।
ज्ञातव्या तर्कविद्या[1] वै, आन्वीक्षिकी[2] च या स्मृता ॥३६३॥

विचारणा[1] तु मीमांसा[2] सर्ग[1] स्तु प्रतिसर्गक[2] ।
तथा वंश[3] श्च वशानु-वंशचरितसञ्ज्ञकम्[4] ॥३६४॥

मन्वन्तराणि[5] यत्रस्युः पुराणं[1] पञ्चलक्षणम् ।
षडङ्ग[6] सहिता[10] वेदा. मीमांसा[11] ऽऽन्विक्षिकी[12]तथा ॥३६५॥

त्रयोदशं धर्मशास्त्रं[13], पुराणं[14] च चतुर्दशम् ।
चतुर्दशैताः विधाःस्यु' लोकशास्त्रे हि उत्तमा . ॥३६६ ।

अथ सूचनकृत् सूत्रं[1], सूत्रोक्तार्थप्रपञ्चकम् ।
भाष्यं[1] ज्ञेयं च प्रस्ताव[1], प्रकरणं[2] ज्ञायतां तथा ॥३६७॥

पदभञ्जन[1] मेवंहि निरुक्तं[2] शीघ्रपाठत ।
अवान्तरप्रकरण-विश्रामे ह्यर्थाह्नि नर्कं[1] तु वै ॥३६८॥

अधिकारोऽधिकरण[1]-मेकन्यायोपपादनम् ।
उक्तानुक्तदुरुक्तार्थ-चिन्ताकारि च वार्त्तिकम्[1] ॥३६९॥

तथा निरन्तरव्याख्या, सा टीका[1] कथ्यते बुधै. ।
पुन र्न्यास[1] पञ्जिका[2]पि तथा स्यात् पदभञ्जिका[3] ॥३७०॥

अथाऽन्वर्थे निबन्ध[1] श्च, वृत्ति.[2] स्याद् संग्रह[1]स्तु वै ।
समाहृति[2] तथा ज्ञेया. परिशिष्टं[1] तु पद्धति.[2] ॥३७१॥

अध्यायो[3]ऽङ्क स्तथोच्छ्वास[4] सर्ग[6] प्रमुखमत्रस्यात् ।
ग्रन्थस्यावयवा. प्रोक्ताः काव्यादौ यत्र कुत्रचित् ॥३७२॥

कारिका[1] स्वल्पवृत्तौ स्याद् बहोरर्थस्य सूचिका ।
ज्ञातव्या सर्वविद्या[1] च कलिन्दिका[2] कडिन्दिका[3] ॥३७३॥

निघण्टु[1] शब्दकोष स्याद्. नामसंग्रह[2] इत्यपि ।
इतिहास.[1] पुरावृत्त[2], द्वयं पूर्वचरित्रके ॥३७४॥

सूचक: गुप्तभावस्य, प्रवह्लिका[1] प्रहेलिका[2] ।
जनश्रुति[1] किंवदन्ती[2], वार्तैतिह्यं[3] पुरातनी ॥३७५

उदन्त[1]स्तु प्रवृत्ति[2] स्याद्, वार्त्ता[3] वृत्तान्तक[4] स्तथा ।
अथाऽऽख्या[1] ऽऽह्वा[2]ऽभिधा[3]ऽभिख्या[4]
संज्ञा[5] गोत्रं[6] तथा ऽऽह्वय:[7] ॥३७६॥

नामधेयं[८] च नाम[६] स्यादथ, सम्बोधनं[१] पदम् ।
आमन्त्रण[२] मपि ज्ञेय- माह्वानं[१] त्वभिमन्त्रणम्[२] ॥३७७॥

आकारणं[३] तथाऽऽकारो[४], हूति[६] राकारणं[७] हव[८] ।
हक्कारक[९] श्च हक्कार:[१०], संहूति[१] र्बहुभि: कृता ॥३७८॥

## ❋ प्रस्तावनामानि ❋

उपोद्घात[१] उपन्यास[२]उदाहार[३]श्च वाङ्मुखम् ।
विवादो[१] व्यवहार:[२] स्यात्, शपनं[१] शपथ:[२] शप:[१] ॥३७९॥

अथ प्रतिवच[१] स्तु स्या, दुत्तर[२]श्चापि कथ्यते ।
पृच्छा[१] ऽनुयोजन[२] प्रश्न:[३], कथंकथिकता[४] किल ॥३८०॥

तथा पर्यनुयोगो[५] वै, अनुयोग[६] श्च कथ्यते ।
देवप्रश्नस्त[१]थैवस्या दुपश्रुति[२] श्च चाटु[१] च ॥३८१॥

प्रियप्रायं[२] चटु[३] तुस्यात्- प्रियसत्यं[१] तु सूनृतम् ।
अथ सत्यं[१] तथा सम्यक्[२], समीचीनं[३] यथास्थितम्[४] ॥३८२॥

यथातथ[५] मृतं[६] तथ्य[७], सद्भूत स्यान्[८] मृषा[१]ऽनृतम्[२] ।
अलीकं[३] वितथ[४] मिथ्या[५], ऽसत्यं[६]सत्येतरत्[७] तथा ॥३८३॥

स्यात् क्लिष्ट[१] सङ्कुल[२] चैव, परस्परपराहतम् ।
सान्त्व[१] सुमधुर[२] स्यात, मश्लीलं[१] ग्राम्य[२] मस्फुटम्[१] ॥३८४॥

अस्पष्ट[२] स्यात् तथा म्लिष्टं[३], लुप्तवर्णपदं[१] पुन ।
ग्रस्त[२] ध्वस्तं[३] मवाच्यं[१] तु, प्रोक्त मनक्षर बुधै: ॥३८५॥

अम्बूकृतं[1] सनिष्ठेव[2], सथूत्कारे च कथ्यते ।
तथा निरस्तं[2] सर्वत्र जानातु त्वरयोदितम् ॥३८६॥

भवेदाम्रेडितं द्विस्त्रि-रुक्तं, निरर्थकं[1] तु वै ।
असम्बद्धं[2] तथाऽबद्धं[3], कथित पण्डितैर्जनैं ॥३८७॥

पृष्ठमांसादनं[1] तद् यद्, परोक्षे दोषदर्शनम् ।
अथ मिथ्याभियोग.[1] स्यादभ्याख्यानं तथा किल ॥३८८॥

स्याद् हृदयंगम[1] चैव, सङ्गतं[2] परुषं[1] वच ।
विक्रुष्ट[2] निष्ठुरं[3] रुक्ष[4]- मुच्चैर्घुष्टं[1] तु घोषणा[2] ॥३८९॥

अथेडा[1] वर्णना[2] श्लाघा[3], स्तव[4] स्तुति[5] र्नुति[6] स्तथा ।
स्तोत्रं[7] तथा प्रशंसा[8] स्या दर्थवाद[9] श्च मन्यते ॥३९०॥

विकत्थनं[1] च मिथ्या स्यात् कौलिनं[1] वचनीयता[2] ।
तथा जनप्रवादो[3] वै, विगान च निगद्यते ॥३९१॥

उपक्रोशो[1] ऽपवाद[2] श्च, गर्हा[3] गर्ह[4] श्च गर्हणा[5] ।
जुगुप्सनं[6] जुगुप्सा[7] च, निन्दा[8] कुत्सा[9] च धिक्क्रिया[10] ॥३९२॥

निर्वाद.[11] परिवाद[12] श्चाऽवर्ण.[13] क्षेप[14] श्च कथ्यते ।
स्यादाऽक्रोश[1] स्तथाऽऽक्षेप:[2], शाप[3] स्तथाऽभिषङ्गक[4] ॥३९३॥

क्षारणा[1] ऽऽक्षारणा[2] स्याद् वै, स रते दूषणं तथा ।
विरुद्धशंसनं[1] गालि[2]- राशी[1] मङ्गलशंसनम्[2] ॥३९४॥
अथ कीर्ति:[1] समाख्या[2] स्याद,
श्लोको[3] ऽभिख्या[4] यश[5] स्तथा
समाज्ञा[6] रुशती[1] वाणी सर्वथा याऽशुभा भवेत् ॥३९५॥

तथा कल्या[1] शुभा वाणी, चर्भटी[1] चर्चरी[2] समे ।
यः सनिन्द उपालम्भः, स्यात् तत्र परिभाषणम् ॥३९६॥

अथाऽऽपृच्छा[1] च सोम्भाष[2], आलाप[3] श्चापि कथ्यते ।
मुहुर्वचोऽनुलाप [1] स्यात्, प्रलाप[1] श्चाप्यनर्थकम्[1] ॥३९७॥

अथोपशोचनं[1] स्याच् च, विलाप.[2] परिदेवनम्[3] ।
उल्लाप.[1] काकुवाह[2] स्याद्,
अन्योऽन्योक्ति[1] स्तु संकथा[2] ॥३९८॥

संलापो[3] विप्रलाप[1] स्तु, विरुद्धोक्ति[2] श्च कथ्यते ।
निह्नव[1] श्चाऽपलाप:[2] स्यात् सुप्रलाप[1] स्तथा पुनः ॥३९९॥

ज्ञेयं सुवचनं[2] चापि, सन्देशवाक्[1] तु वाचिकम्[2] ।
अथाऽऽज्ञा[1] शासनं[2] शिष्टि[3] निर्देश[4]श्च नियोगक[5] ॥४००॥

आदेश[6]श्च निदेशो[7] वै, अववाद[8]श्च कथ्यते ।
सेवकादिक माहूय प्रेषणं प्रतिशासनम्[1] ॥४०१॥

अथाऽऽस्था[1] संश्रवः[2] सन्धा[3], संवित्[4] प्रतिश्रवा[5]ऽऽश्रवौ[6] ।
आगू[7] श्चापि प्रतिज्ञा[8] वै, समाधिः[9] सङ्गर[10] स्तथा ॥४०२॥

अङ्गीकारो[11] ऽभ्युपाय[12] श्च, स्यादभ्युपगम[13]स्तथा ।
गीतनृत्यवाद्ययुक्तं, नाट्यं[1] तौर्यत्रिक[2] भवेत् ॥४०३॥

सङ्गीत[1] मीक्षणार्थेऽस्मिन्, शास्त्रोक्ते नाट्यधर्मिका[1] ।
गीतं[1] गान[2]ञ्च गान्धर्वं[3], गेय[4] गीति[5] श्च कथ्यते ॥४०४॥

नर्त्तन[1] नटनं[2] नृत्यं[3], नृत्तं[4] नाट्यं[5] च ताण्डवम्[6] ।
लास्य[7] ञ्चेति हि नामानि, कथ्यन्ते कोविदैः किल ॥४०५॥

स्त्रीमण्डलेन यन्नृत्य, ज्ञेयं हल्लीसक[1] हि तत् ।
मद्यपानेन यन्नृत्यमुच्चताल[1] तु कथ्यते ॥४०६॥

समराङ्गणे च यन्नृत्य ज्ञेयं वीरजयन्तिका[1] ।
नाट्यस्थान तु रङ्ग[1] स्यात्, पूर्वरङ्गो[1] ऽप्युपक्रमः । ४०७॥

अङ्गहारो[1] ऽङ्गविक्षेपो व्यञ्जको[1] ऽभिनयो[2] भवेत् ।
चतुर्विधानि नामानि प्रथितानि च यथाक्रमम् ॥४०८॥

आहार्यो[1] ऽभिनयो ज्ञेयो, रचितो भूषणादिना ।
वाचिको[2] वचसा चैव तथाऽङ्गेनाऽऽङ्गिक[3] किल ॥४०९॥

सत्त्वेन सात्त्विक[4] श्चैव, कथ्यते कोविदैः खलु ।
अथ स्यान्नाटक[1] भाणः[2], तथा प्रहसनं[3] डिम[4] ॥४१०॥

अङ्क[5] प्रकरणं[6] चैव, व्यायोगेहा[7] मृगो[8] तथा ।
वीथीऽसमवकार[10] श्च, नाटकादौ प्रयुज्यते ॥४११॥

षट् संस्कृतादिकाः भाषाः, कथ्यन्ते क्रमशो यथा ।
संस्कृतं[1] प्राकृतं[2] शौरसेनी[3] पैशाच[4]-मागधी[5] ॥४१२॥

अपभ्रंशो[6] ऽपि विज्ञेयो, नृत्य-गीताऽभिनेयके ।
भारती[1] सात्वती[2] चापि, कौशिक्या[3] रभटी[4] तथा ॥४१३॥

चतुर्विधा वृत्ति रेषा, काव्य-नाटकयोः स्थिता ।
तूर्यं[1] वादित्र[2] मातोद्यं[3], तूरं[4] वाद्यं[5] स्मरध्वज[6] ॥४१४॥

ततं[1] वीणादिवाजिन्त्रं, घनं[1] तालादिकं तथा ।
शुषिरं[1] चादि वंशादि- मानद्ध[1] दर्दरं[2] तथा ॥४१५॥

करट[3] मवनद्धं च, कथ्यते मुरजादिकम् ।
वीणा[1] घोषवती[2] चैव, विपञ्ची[3] कण्ठकूणिका[4] ॥४१६॥

वल्लकी[5] चाथ तन्त्रीभिः, सप्तभि. परिवादिनी[1] ।
अनालम्वी[1] शिवस्य स्यात्, सरस्वत्या स्च कच्छपी[1] ॥४१७॥

महती[1] नारदस्य स्याद् गणानां च प्रभावती[1] ।
बृहती[1] संज्ञका वीणा, विश्वावसो स्तु कथ्यते ॥४१८॥

अथ कलावती[1] वीणा, तुम्बुरस्य हि कथ्यते ।
चण्डालानां तु डक्कारी[1], किनरी[2] वल्लकी[3] तथा ॥४१९॥

काण्डवीणा[4] कुवीणा[5] वै, चाण्डालिका[6] च खुङ्गाणी[7] ।
तथा कटोलवीणा[8] वै, सारिका[9] चेति कथ्यते ॥४२०॥

तस्याः कोलम्बकः[1] काय, उपनाहो[1] निवन्धनम्[2] ।
प्रवालः[1] स्यात् पुनर्दण्डः, ककुभ[1] स्तु प्रसेवक[2] ॥४२१॥

स्यान्मूले कलिका[1] वंश- शलाका[2] कूणिका[3] तथा ।
कालस्य क्रियया मानं, ताल[1] साम्यं लय.[1] पुन. ॥४२२॥

स्याद् शीघ्रगतिमन् नृत्यादिकमघो द्रुतं[1] किल ।
स्यान् मन्दगतिमन् नृत्यं, तत्त्व विलम्बित[2] खलु ॥४२३॥

मध्यमगतिमन् नृत्यादिकं मध्यं[1] घन तु वै ।
पुनरनुगतं चेति, कोविद. कथ्यते किल ।।४२४।।

मृदङ्गो[1] मुरज[2] श्चेति, सोऽङ्कचा[1] लिङ्ग[2] यूर्ध्वक[3] त्रिधा ।
स्याद् यशःपटह[1] श्चैव, ढक्का[2] भेरी[1] तु दुन्दुभि.[2] ।।४२५।।

आनकः[3] पटह[4] श्चाथ दर्दरः कलशीमुखः[2] ।
ज्ञेयं वै सूत्रकोण[1] श्च, डमरुकं पुन स्ततः ।।४२६।।

पणवः[1] किकण[2] स्याद् वै हुडुक्क[1] तालमर्दकः[2] ।
वाजिन्त्रं शृङ्गवाद्यं[1] तु, शृङ्गमुखं[2] तथैव च ।।४२७।।

कुहाला[1] काहला[2] स्याद् वै, चण्डकोलाहला[3] तथा ।
द्रकटः[1] द्रगड[2] पश्चापि, स्याद् धूमल[1] स्तथा बलि[2] ।।४२८।।

क्षुण्णकं[1] क्षणक[2] चाथ, स्यात् प्रियवादिका किल ।
वाजिन्त्र मर्धतूरं[1] स्याद्, डिण्डिम[1] स्टट्टरी[2] तथा ।।४२९।।

झर्झर[3] श्च कलापूर.[4], तिमिला[5] लम्बिका[6] तथा ।
वेध्या[7] तथापि मड्डु[8] श्च, ज्ञातव्या किरिकिञ्चिका[9] ।।४३०।।

अथ स्यात् शारिका[1] कोणो, वीणादिवादनं किल ।

## ❋ रसनामानि ❋

अथ शृङ्गार[1]-हास्यौ[2] च, करुणः[3] रौद्र[4]-वीरकौ[5] ।।४३१।।

भयानक[6] श्च बीभत्सो[7]-ऽद्भुत[8]-शान्तौ[9] रसा. नव ।
ज्ञेयाः पुन स्त्रिधा भावा[1],
स्थायिन.[1] सात्त्विका[2] स्तथा ।।४३२।।

सञ्चारिण:[३] प्रभेदाश्च, रसानां तु रति:[१] पुन: ।
राग[२] श्चाप्यनुराग[३] श्चा- ऽनुरति[४] र्हसनं[१] तु वै ॥४३३॥

हसो[२] ह्रास[३] श्च ह्रास्य[४] ञ्च, ह्रासिका[५] घर्घर[६] स्तथा ।
तत्राद्दष्टरदे वक्त्रो-ष्ठिका[१] स्मितं[२] च कथ्यते ॥४३४॥

हसितं[१] कथ्यते प्राय· किञ्चिद्दृष्टरदाङ्कुरे ।
तथा विहसितं[१] किञ्चि-च्छ्रुते वै कथ्यते बुधै· ॥४३५॥

अनुस्यूतेऽतिहास:[१] स्यादट्टहासो[१] महीयसि ।
अकारणात् कृते हासेह्यपहास:[१] स कथ्यते ॥४३६॥

अथाऽऽच्छुरितकं[१] हास्य सोत्प्रासे मन्यते खलु ।
कथ्यते हसनं[१] चापि कोविदै: स्फुरदोष्ठके ॥४३७॥

अथ स्याद् शोचनं[१] शोक:[२], शुक्[३] खेद[४]श्च रुषा[१] तथा ।
रुट्[२] रोषो[३] प्रतिघ:[४] कोप:[५],
क्रुत्[६] क्रोधश्च[७] तथा क्रुधा[८] ॥४३८॥

मन्यु[६] श्चाथा ऽभियोग[१] श्चोत्साह [२] प्रौढि:[३] प्रगल्भता[४]
उद्योग[५] उद्यम[६] श्चोर्ज.[७], तथापि कियदेतिका[८] ॥४३९॥

पुन श्चाऽध्यवसायो[६]ऽथ, वीर्यं[१] सोऽतिशयान्वित: ।
आतङ्को[१] स्तु भयं[२] भीति·[३],
भिया[४] भी:[५] साध्वसं[६] दर:[७] ॥४४०॥

आशङ्का[६] चापि तच्चाऽहिभयं[१] ज्ञेय स्वपक्षजम् ।
भूपतीना मथाऽदृष्टं[१], जलाग्निप्रमुखात् तथा ॥४४१॥

स्वपर चक्रजं हृदं[१], ज्ञेयं भीमं[१] च भैरवम्[२] ।
दारुणं[३] भीषणं[४] घोर[५], भयानकं[६] भयावहम्[७] ॥४४२॥

भयङ्करं[८] तथा भीष्मं[९], प्रतिभयं[१०] च भासुरम्[११] ।
आभीलं[१२] डमरं[१३] चैव, जुगुप्सा[१] तु घृणा[२] खलु ॥४४३॥

अथ स्याद् विस्मयो[१] मोह[२], चित्रं[३] चोद्यं[४] तथाऽद्भुतम्[५] ।
आश्चर्यं[६] फुल्लकं[७] वीक्ष्यं[८], शान्ति[१] स्तु शमथ[२] स्तथा ॥४४४॥

उपशम[३] शम[४] श्चैव, तृष्णाक्षय[५] स्तथैव च ।
अमी तु स्थायिनो भावाः, रसानां कारण क्रमात् ॥४४५॥

शृङ्गारे च रति स्थायी, हास्ये तु हसनं तथा ।
शोकः स्थायी च करुणे, क्रोधो रौद्र रसे तथा ॥४४६॥

वीरे स्थायी समुत्साहोभयानके च भयं भवेत् ।
स्थायी भावश्च बीभत्से, जुगुप्सा च घृणाथवा ॥४४७॥

आश्चय विस्मयश्चित्रं, स्थायी भावोऽद्भुते रसे ।
शान्तरसे, च तृष्णान्त स्थायि भावश्च जायते ॥४४८॥

अथ स्तम्भो[१] भवेज् जाड्यं[२], धर्मः[१] स्वेद[२] स्तथैव च ।
निदाघ[३] श्चाथ रोमाञ्च[१], कण्टकः[२] पुलक[३] स्तथा ॥४४९॥

रोमोद्गम[४] स्तथा रोमविकारो[५] रोमहर्षणम्[६] ।
पुन रुद्धुषणं[७] ज्ञेयमुल्लकसनमित्यपि ॥४५०॥

कल्लत्वं[१] स्वरभेद[२] स्याद्, स्वरे कम्प[१] स्तु वेपथु[२] ।
वैवर्ण्य[१] कालिका[२] स्याद वै, दृग्जलं[१] रोदनं[२] भवेत् ॥४५१॥

अस्र[३] मस्त्रु[४] च नेत्राम्बु[५], बाष्पो[६] लोत[७] स्तथाऽश्रु[८] वै ।
मूर्च्छा[१] तु प्रलय[२] श्चैवासात्विकाऽचेष्टिताऽखित्वा ॥४५२॥

अथ स्वास्थ्यं[१] च सन्तोषो[२], धृतिः[३] स्यात् स्मरणं[१] स्मृतिः[२] ।
अध्यानं[३] धी[१]र्मति[२] र्बुद्धि[३], र्मनीषा[४] धिषणा[५] पुन ॥४५३॥

ज्ञप्ति[६] श्चित्[७] चेतना[८] प्रज्ञा[९], प्रेक्षा[१०] च प्रतिभा[११] तथा ।
उपलब्धि[१२] श्च संवित्ति[१३],
दृष्टि[१४] श्च शेमुषी[१५] तथा ॥४५४॥

प्रतिपद्[१६] षोडशं नाम, सा मेधा[१] धारणक्षमा ।
तत्त्वानुसारिणी पण्डा[१], ज्ञानं[१] च मोक्षदायकम् ॥४५५॥

विज्ञान मन्यतो ज्ञेयं, धीगुणा अष्टधा पुन. ।
शुश्रूषा[१] श्रवणं[२] चापि, ग्रहणं[३] धारणं[४] तथा ॥४५६॥

ऊहो[५] ऽपोहो[६] ऽथ विज्ञानं[७], तत्वज्ञान[८] च मन्यते ।
अथ व्रीड[१] श्च मन्दाक्षं[२], शूका[३] सूका[४] तथा त्रपा[५] ॥४५७॥

व्रीडा[६] लज्जा[७] तथा ह्री[८] श्च, ज्ञेया सा ऽपत्रपा[९] ऽन्यत ।
अथ जाड्यं[१] तथा मौर्ख्यं[२], विषाद[१] स्तु विषण्णता[२] ॥४५८॥

अवसाद[३] श्च सादोऽ[४]पि, विबुधै: कथ्यते किल ।
मदो[१] मुन्मोहसम्भेद., स्याद् व्याधि[१] स्तु रुजाकरः[२] ॥४५९॥

आधि[३] श्चाथ प्रमीला[१] स्यात्, तन्द्रा[२] तन्द्रि[३] श्च तामसी[४]।
तन्द्री[५] नन्दीमुखी[६] निद्रा[७], श्वासहेति[८] श्च संलय[९] ॥४६०॥

संवेश:[१०] शयन[११] स्वाप[१२], सुप्तं[१] तु सुखसुप्तिका[२] ।
सुष्वाप[३] श्चेति निद्राया, स्त्रयं नामाधिक खलु ॥४६१॥

अथौत्सुक्यं[1] तथोत्कण्ठ[2], आयल्लकं[3] तथाऽरति[4]।
उत्कलिका[5] तथोत्कण्ठा[6], रणरणक[7] इत्यपि।४६२॥

हृल्लेख[8] श्चापि प्रोक्तोऽथैऽऽवहित्था[1] ऽऽकार गोपनम्[2]।
आकारगूहनं[3] गूहजालिका[4] ऽवकुट्टारिका[4]॥४६३॥

अवकुठारिका[5] चैव, स्यादऽवकटिका[6] तथा।
अनिष्टोत्प्रेक्षणं शङ्का[1], कथ्यते पण्डितै. सदा॥४६४॥

अथाऽनवस्थिति[1] र्नाम, चापलं[2] च तदेव स्यात्।
तन्द्रा[1] ऽऽलस्य[2] श्चकौसीद्य[3], स्याद् वै चित्तप्रसन्नता[1]॥४६५॥

ह्लादो[2] हर्षः[3] प्रमोद[4]श्च, प्रमदो[5] मुच्[6] च सम्मद[7]।
आनन्दा[8] ऽऽनन्दथू[9] प्रीति[10], आमोद[11] श्चापि कथ्यते॥४६६॥

अथ गर्व[1] श्च दर्प[2] श्च, मान[3] श्चित्तोन्नति[4] स्मय[5]।
ममता[6] चाऽभिमानः[7] स्या, दहङ्कारो[8] ऽवलिप्तता[9]॥४६७॥

अहमहमिका[1] ज्ञानं, युद्धादौ दृश्यते सदा।
आहोपुरुषिका[2] दर्पात्, या सा सम्भावनाऽऽत्मनि॥४६८॥

अहं पूर्व मह पूर्वमिति स्यादहम्पूर्विका[1]।
अहंप्रथमिका[2] चैव, तथा ऽहमग्रिका[3] किल॥४६९॥

उग्रत्वं[1] चण्डता[2] स्याद् वै, ग्लानि[1] स्तु बलहीनता[2]।
प्रबोध[1] स्याद् विनिद्रत्वं[2], दैन्यं[1] कार्पण्य[2] मुच्यते॥४७०॥

अथाऽऽयासः[1] प्रयास[2] श्च व्यायाम[3] श्च परिश्रमः[4]।
क्लम[5] क्लेशः[6] श्रमो[7] ऽपिस्या, दुन्माद[1] श्चित्तविप्लव.[2]॥४७१॥

मोहो[1] मौढ्यं[2] समानार्थः, चिन्ता[1] ध्यानं[2] तथैव च।
अमर्ष[1] क्रोधसञ्जातो, जिगोषोत्साहवान् गु : ।।४७२।।

आकस्मिकं भयं त्रासः[1], स्यादाऽऽवेश[1] स्तथा किल।
अपस्मारो[2] ऽथ निर्वेद[1], कथ्यते स्वावमाननम् ।।४७३।।

आवेग:[1] स्यात् त्वरा[2] तूर्णि:[3], संवेग[4] सम्भ्रम[5] स्त्वरि.[6]।
अथ तर्क:[1] परामर्शो[2], वितर्क[3] श्च विमर्शनम्[4]।
ऊह[5] उन्नयनं[6] चोहा[7] ऽध्याहार[8] श्चापि उच्यते ।।४७४।।

अन्येषाञ्च गुणे दोषाऽऽरोपणं क्रियते च यत्।
कथ्यते खल्वऽसूया[1] सा, लोकमध्ये तु पण्डितै ।।४७५।।

## ❊ मृत्युनामानि ❊

मृत्यु[1] कालो[2] मृतिः[3] संस्था[4], कालधर्मो[5] निमीलनम्[6]।
पञ्चत्व[7] मवसानं[8] च, तथा निधन[9] मत्यय:[10] ।।४७६।।

दीर्घनिद्रा[11] च दिष्टान्त[12], परलोकगम[13] स्तथा।
नाशो[14] ऽस्त[15] चेति मृत्योर्नामानि कथितानि वै ।।४७७।।

पुन: स्यात् सर्वगा मृत्यु: मोरि[1] श्च मरक[2] स्तथा।
त्रयस्त्रिंशदमी भावा:, भवेयुर्व्यभिचारिण: ।।४७८।।

कारणानि चकार्याणि, सहचारीणि यानि वै।
रत्यादे. स्थायिनो लोके, तानि चेन् नाट्य-काव्ययो: ।।४७९।।

विभावा[1] श्चाऽनुभावा[3] श्च, व्यभिचारिण[3] एव वै।
व्यक्तः स तैर्विभावाद्यै., स्थायिभावो भवेद् रसः[1] ।।४८०।।

ये नाट्येऽधिकृता. सन्ति. लोके पात्र[1]ञ्च तान् विदु. ।
तत्तद्वेषोऽपि नाट्ये वै, मन्यते भूमिका[2] किल ॥४८१॥

※ नटनामानि ※

अथ नट.[1] कृशाश्वी[2] च, शैलूषो[3] भरत[4] स्तथा ।
घर्मी पुत्र[5] श्च शैलाली[6],
तथा भरत पुत्रक.[7] ॥४८२॥

जायाजीव[8] श्च रङ्गाजीवो[9] रङ्गावतारकः[10] ।
कथ्यते सर्वकेशी[11] च,
चारण[1] स्तु कुशीलव.[2] ॥४८३॥

भ्रकुंस[1] स्याद् भ्रुकुंस[2] श्च भ्रकुशो[3] भृकुंस[4] स्तथा ।
स्त्रीवेषधारक सोऽपि नाटके कथ्यते नटः ॥४८४॥

पुनः स्यात् पीठमर्द[1] श्च, वेश्याचार्य[2] स्तथैव च ।
सूचकः[1] सूत्रधार.[2] स्यात्,
स्थापको बीजदर्शक ॥४८५॥

नन्दी[1] स्यात् पाठको नान्द्याः, पार्श्वस्थः[1] पारिपार्श्विकः[2] ।
विदूषकः[1] प्रहासी[2] स्याद्,
वासन्तिक[3] श्च प्रीतिद[4] ॥४८६॥

वैहासिक[5] स्तथा केलिकिलः[6] केलीकिल[7] श्च वै ।
अथ पल्लवक[1] षिङ्गः[2], स्तथा विटोऽपि कथ्यते ।
आवुक[1] श्च पिता प्रोक्त, आवुत्त[1]-भावुकौ[2] पुनः ॥४८७॥

भगिनी स्वामिनी प्रोक्ता भावो[1] विद्वान् हि कथ्यते ।
युवराजः[1] कुमार[2] श्च,
स्याद् भर्तृदारक[3] स्तथा ॥४८८॥

बाला[1] वासूः[2] कुमारी स्याद्,
मार्ष[1] आर्य[2] श्च मारिषः[3] ।
देवो[1] भट्टारको[2] भूपः,
श्यालो नृपस्य राष्ट्रियः[1] ॥४८९॥

स्याद् भर्तृदारिका[1] सा तु, कथ्यते दुहिता बुधैः ।
देवी[1] कृताभिषेकाऽन्या, कथ्यते भट्टिनी[1] तथा ॥४९०॥

अज्जुका[1] चाऽर्जुका[2] चैव, कथिताः गणिकाः[3] किल ।
नीचा[1] चेटी[2] सखी[3] हूतौ,
हण्डे[1]-हञ्जे[2]-हला[3] क्रमात्॥४९१॥

अब्रह्मण्य[1] मवध्योक्तौ, स्याद् ज्यायसी स्वसाऽत्तिका[1] ।
तथा भर्त्ताऽऽर्यपुत्रो[1] वै,
माताऽम्बा[1] कथ्यते बुधैः ॥४९२॥

भदन्ता[1] श्चापि वै ज्ञेयाः, सौगतप्रमुखाश्च ये ।
पूज्य[1] स्तत्रभवा[2] नत्रभवांश्च भगवानपि[6] ॥४९३॥

इत्येवं कथ्यते पूज्ये, प्रयोज्यः पूज्यनामतः ।
भट्टो[1] भट्टारको[2] देवः, पादा[3] भरटक[4] स्तथा ॥४९४॥

गुरुपादाः यथा ज्ञेया[1], अर्हद्भट्टारक स्तथा ।
कुमारपालदेव श्चेत्यादयोऽनेकशब्दकाः ॥४९५॥

इति श्रीतपोगच्छाधिपति - सूरिचक्रचक्रवर्त्ति - भारतीयभव्यविभूति - चिरंतनयुगप्रधानकल्प - सर्वतन्त्रस्वतन्त्र - श्रीकदम्बगिरिप्रमुखानेक - प्राचीन तीर्थोद्धारक - पञ्चप्रस्थानमयसूरिमन्त्रसमाराधक - शासन - सम्राट् - जगद्गुरु - भट्टारकाचार्य महाराजाधिराज - **श्रीमद्विजय - नेमिसूरीश्वर** - सुप्रसिद्ध पट्टालङ्कार - व्याकरणवाचस्पति - शास्त्र - विशारद - कविरत्न - साहित्यसम्राट् - साधिकसप्तलक्षश्लोक प्रमाण नूतन सस्कृत साहित्यसर्जक - परमशासन प्रभावकाचार्य देवेश - **श्रीमद्-विजयलावण्यसुरीश्वर** - पट्टधर — व्याकरणरत्न - शास्त्रविशारद - कविदिवाकर - देशनादक्ष - शासनप्रभावकाचार्यदेव - **श्रीमद्विजय - दक्ष सूरीश्वर** - पट्टधर — साहित्यरत्न - शास्त्रविशारद - कविभूषण - पञ्चप्रस्थानमयसूरिमन्त्रसमाराधक - शासनप्रभावकाचार्य - **श्रीमद् - विजयसुशीलसूरिणा** विरचिताया सुशीलनाममालायां - **द्वितीयो - देवविभाग** समाप्तः ॥२॥

# ॥ तृतीयो मर्त्यविभागः ॥

## ※ मनुष्यनामानि ※

मनुष्यो[1] मानुषो[2] मर्त्यो[3], मनुजो[4] मानवो[5] नरः[6] ।
भूस्पृक्[7] पञ्चजनो[8] ना[9] विट्[10],
पूरुषः[11] पुरुषः[12] पुमान्[13] ॥४९६॥

## ※ बालनामानि ※

बालो[1] डिम्भः[2] शिशुः[3] शावः[4], पोतः[5] पाकः[6] स्तनन्धयः[7] ।
अर्भो[8]त्तानशयौ[9] चैव, क्षीरकण्ठः[10] कुमारकः[11] ॥४९७॥

कुमारः[12] क्षीरप[13] श्चैव, पृथुकः[14] स्तनप[15] स्तथा ।
स्यात् शिशुत्वं[1] तथा बाल्यं[2], शैशवं[3] चापि मन्यते ॥४९८॥

## ※ युवनामानि ※

वयस्थ[1] स्तरुण[2] श्चैव, युवा[3] ऽपि कथ्यते बुधैः ।
तारुण्यं[1] यौवनं[2] चैव, यौवनिका[3] ऽपि मन्यते ॥४९९॥

## ※ वृद्धनामानि ※

वृद्ध[1] श्च स्थविरो[2] जीर्णो[3], जीनो[4] जरी[5] जरन्[6] तथा ।
प्रवयाः[7] यातयाम[8] श्च, कथ्यते विबुधै रिति ॥५००॥

विस्रसा[1] च जरा[2] स्याद् वै, वार्द्धकं[1] स्थाविरं[2] पुनः ।
ज्यायान्[1] जरत्तर[2] श्चैव, वर्षीयान्[3] दशमी[4] तथा ॥५०१॥

दशमीस्थ[५] श्च विद्वद्भि, रित्येवं कथ्यते किल ।

## * पण्डितनामानि *

पण्डित:[१] प्राप्तरूप[२] श्च, विद्वान्[३] सुधी.[४] कविः[५] कृती[६] ॥५०२॥

लब्धवर्णो[७] ऽभिरूप[८] श्च, धीमान्[९] धीर[१०] सुधी[११] बुंध.[१२] ।
ज्ञः[१३] प्राज्ञ[१४] श्च प्रबुद्ध[१५] श्च,
व्यक्तो[१६] विचक्षण[१७] स्तथा ॥५०३॥

मतिमान्[१८] चाऽभिरूपः[१९] सन्[२०],
विपश्चित्[२१] कविता[२२] तथा ।
दोषज्ञ.[२३] कोविद.[२४] सूरि.[२५],
संख्यावान्[२६] च विशारदः[२७] ॥५०४॥

मनीषी[२८] चापि मेधावी[२९], कृष्टि[३०] श्चेत्यपि मन्यते ।

## * प्रवीणनामानि *

प्रवीण.[१] शिक्षितो[२] दक्षो[३], निष्णातो[४] निपुण:[५] पटुः[६] ॥५०५॥

विज्ञो[७] वैज्ञानिको[८] ऽभिज्ञ[९], चतुरः[१०] कुशल[११] स्तथा ।
क्षेत्रज्ञ[१२] कृतकृत्य[१३] श्च, कृतहस्त[१४] कृती[१५] तथा ॥५०६॥

कृतकर्मा[१६] कृतार्थ[१७] श्च, निष्ण[१८] कृतमुख[१९] स्तथा ।
नदीष्ण[२०] श्च विदग्ध[१] स्तु, छइल्ल[२] छेकिल[३] स्तथा ॥५०७॥

छेकाल[४] श्चापि छेको[५] वै, प्रौढ[१] स्तु प्रतिभान्वितः[२] ।
प्रगल्भः[३] सूक्ष्मदर्शी[१] तु कुशाग्रीयमति[२] स्तथा ॥५०८॥

प्रत्युत्पन्न मति[1] र्नाम, तथा तत्कालधो[2] रपि ।
कथ्यते दीर्घदर्शी[1] च, दूरदर्शी[2] बुधैः किल ॥५०६॥

चिद्रूपो[1] हृदयालु[2] श्च, सहृदयो[3] ऽथ सस्कृत[1] ।
व्युत्पन्नः[2] प्रहतः[3] क्षुण्ण.[4], अन्तर्वाणि[1] स्तु शास्त्रवित्[2] ॥५१०॥

स्याद् वाक्पति[1] श्च वागीश[2], प्रवाक्[1] वावदूक[2] स्तथा ।
वाचोयुक्तिपटु[3] र्वाग्मी[4], समुखः[5] कथ्यते बुधै ॥५११॥

अथ वदावदो[1] वक्ता[2], वद[3] स्याद् बहुगर्ह्यवाक्[1] ।
वाचाट[2] श्चापि वाचाल.[3], जल्पाकः[4] कथ्यते बुधैः ॥५१२॥

यद्वदो[1] ऽनुत्तर.[2] स्याद् वै, दुर्वाक्[1] तु कद्वद[2] स्तथा ।
अधरो[1] हीनवादी[1] स्यादेडमूक[1] स्त्ववाक् श्रुतः[2] ॥५१३॥

कलामूक[3] स्तथाऽनेडमूको[4] ऽपि कथ्यते बुधै ।
रवण.[1] शब्दन.[2] स्याद् वै, कुवाद[1] कुटिलाशय.[2] ॥५१४॥

कुचरोऽपि भवेन्नाम, लोहृजो[1] ऽस्फुटवाक्[2] तथा ।
काहल[3] श्चाधमूकोऽवाक्[2], जडो[3] गडो[4] जड[5] स्तथा ॥५१५॥

अथाऽसौम्यस्वरो[1] लोके, कथ्यतेऽस्वर[2] एव हि– ।
त्रिदुरो[1] वेदिता[2] चैव, कथ्यते विन्दु[3] रित्यपि ॥५१६॥

अथाऽभिवादक[1] श्चैव, वन्दारु[2] कथ्यते बुधै ।
आशसिता[1] तथा ऽऽशसु[2], कद्वर[1] स्त्वति कुत्सित.[2] ॥५१७॥

कत्वर.[3] स्यादथ क्षिप्नु[1], निराकरिष्णु[2] रप्यथ ।
विकस्वरो[1] विकासी[2] स्यान्, मुखर[1] श्चापि दुर्मुखः[2] ॥५१८॥

तथाऽबद्धमुखो[3] दुष्टवचन[4] कथ्यते बुधैः।
शुक्लः[1] प्रियंवदः[2] स्याद् वै, प्रियवाक्[3] सैव कथ्यते ॥५१९॥

वदान्य[1] स्तु वदन्य[2] श्च, दानशीलः स कथ्यते।
अथ मूर्खो[1] यथाजातो[2], बालिशो[3] मातृशासितः[4] ॥५२०॥

मातृमुख[5] श्च मूढो[6] ऽज्ञो[7], मन्द[8] श्च नामवर्जितः[9]।
बालो[10] ऽमेधाः[11] विवर्ण[12] श्च,
वैधेय[13] श्च यथोद्गतः[14] ॥५२१॥

देवानांप्रिय-[15] जाल्मौ[16] वै, जडो[17] ऽनेड[18] श्च कथ्यते।
मन्दः क्रियासु कुण्ठः[1] स्याद्, दीर्घसूत्री[1] चिरक्रिय[2] ॥५२२॥

कर्मोद्यत क्रियावान्[1] वै, कर्मक्षमोऽपि कथ्यते।
तथाऽलङ्कर्मीणः[2] किल, कर्मशूर[1] स्तु कर्मठः[2] ॥५२३॥

स्यात् कार्मः[1] कर्मशील[2] श्च, पुनस्तु तीक्ष्णकर्मकृत्[1]।
किलाऽऽयः शूलिक[2] श्चैव, ज्ञेयो राभसिक[3] स्तथा ॥५२४॥

अथ स्वङ्ग[1] स्तथा सिंह-संहननो[2] ऽपि मन्यते।
स्यात् स्वतन्त्र[1] स्वच्छन्द[2] श्च,
स्वैरी[3] वै स्वरुचि[4] स्तथा ॥५२५॥

अपावृतौ[5] यथाकामी[6], तथापि निरवग्रहः[7]।
स्वेच्छा[1] च स्वैरिता[2] चैव, यदृच्छा[3] मन्यते किल ॥५२६॥

※ पराधीन नामानि ※

परवश[१] पराधीन[२], परायत्त[३] श्च गृह्यक[४] ।
परतन्त्रः[५] पुरच्छ द[६], आयत्तः[७] परवान्[८] वश[९] ॥५२७॥

अधीन[१०] श्चापि निघ्नो[११] वै, आधीन[१२] कथ्यते बुधैः ।

※ श्रीमता नामानि ※

अथ श्रीमान्[१] च लक्ष्मीवान्[२],
श्लीलः[३] श्रील[४] श्च लक्ष्मणः[५] ॥५२८॥

स्यादिभ्य[१] स्तु समृद्धो[२] वै, ऋद्ध[३] आढ्यो[४] धनी[५]-श्वर[६] ।

※ लक्ष्मी नामानि ※

श्री[१] स्तु लक्ष्मी[२] विभूति[३] र्वै,
ऋद्धि[४]-सम्पत्ति[५]-सम्पदः[६] ॥५२९॥

स्याद् दरिद्र[१] स्तथा दुःस्थः[२], क्षुद्रो[३] दुर्विध[४]-दुर्गतौ[५] ।
कीकटो[६] ऽकिञ्चनो[७] निःस्वो[८],
दीनो[९] नीचो[१०]ऽपि कथ्यते ॥५३०॥

※ स्वामि नामानि ※

अथ स्वामी[१] विभु[२] भर्त्ता[३], परिवृढ[४] प्रभु[५] पति[६] ।
अधिप[७] श्चाऽधिभू[८] रर्यो[९],
नेता[१०] नाथ[११] श्च नायकः[१२] ॥५३१॥

ईशि[13]तेशे[14]श्वरे[15] न्द्र[16] ना[17],
कथ्यते कोविदै किल ।

※ दास नामानि ※

अथ दास[1] श्च भृत्य[2] श्च, किङ्करो[3] डिङ्गर[4] स्तथा ॥५३२॥

गोप्य[5] प्रेष्यो[6] भुजिष्यश्च[7] परान्नः[8] परिचारक[9] ।
परिकर्मी[10] परिस्कन्दः[11], पराचित[12] परैधित[13] ॥५३३॥

नियोज्य[14] परपिण्डाद[15], चेट[16] प्रतिचर[17] स्तथा ।
मन्यते परजातो[18]ऽपि-विबुधै र्दासवाचके ॥५३४॥

※ कमकर नामानि ※

भृतिभुग्[1] भृतको[2] वैतनिक[3] कर्मकरो[4] अपि ।
निर्भृतिः कर्मकारो[1]ऽयं, कथ्यते साक्षरै रिह ॥५३५॥

※ वेतन नामा ※

भृति[1] स्याद् वेतनं[2] मूल्य[3], कर्मणां[4] निष्क्रय[5] पणः[6] ।
भर्मण्या[7] भर्म[8] निर्वेशो[9],
भृत्या[10] च भरण[11]विधा[12] ॥५३६॥

गणिका[1] भृतिस्तु भोगो[2] भाटि[3] रित्यपि कथ्यते ।

※ खलपू नामानि ※

बहुधान्यार्जक[1] स्याद् वै, संमार्जको[2] बहुकरः[3] ॥५३७॥

खलपू[४] नाम निर्देशः, भारवाह[१] स्तु भारिक[२] ।
पुन र्वार्त्तावहे[१] वैवधिको[२] विवधिक[३] स्तथा ॥५३८॥
किल वीवधिक[४] श्चेति, भारे[१] विवध-[२] वीवधौ ।
शिक्यं[१] काच[२] स्तदालम्बो, भारयष्टि[१] विहङ्गिका[२] ॥५३९॥
तथा विहङ्गमा[३] चेति, विबुधे कथ्यते खलु ।

## ※ वीरनामानि ※

स्याद् वै वीर[१] श्च विक्रान्त[२], शूर[३] श्चारभट[४] स्तथा ॥५४०॥

## ※ भीरुनामानि ※

अथ स्याद् भीरुको[१] भीरु[२], भीत[३] श्च भीलुक[४] स्तथा ।
कातर[५] श्चकित[६] स्त्रस्तः[७], त्रस्नु[८] श्च दरित[९] स्तथा ॥५४१॥
व्यग्र[१] स्याद् व्याकुल[२] श्चैव, विहस्तो[३] ऽपि तथैव च ।
कान्दोशिकोः[१] भयद्रुते, समुत्पिञ्ज[१] स्तु पिञ्जलः[२] ॥५४२॥
उत्पिञ्जल[३] स्त्रयश्चैते, मन्तव्या भृशमाकुले ।

## ※ उदारनामानि ※

अथोद्भटो[१] महेच्छ[२] स्यान्, महात्मा[३] च महाशयः[४] ॥५४३॥
तथोदारो[५] ऽप्युदीर्णो[६] वै, उदात्त[७] श्च महामना ।

## ❋ कृपणनामानि ❋

कृपण[1] स्तु कदर्य[2] श्च, किम्पचानो[3] मितम्पच.[4] ॥५४४॥

कीनाशो[5] दृढमुष्टि[6] श्च, क्षुद्र[7] स्तथैव तद्धनः[8] ।

## ❋ कृपालुनामानि ❋

कृपालु[1] स्तु दयालु[2] श्च, सूरतः[3] करुणापर.[4] ॥५४५॥

## ❋ दयानामानि ❋

अथ दया[1] घृणा[2] शूक.[3], कारुण्यं[4] करुणा[5] कृपा[6] ।
अनुक्रोशो[7] ऽनुकम्पा[8] स्याद्,

## ❋ हिंसकनामानि ❋

हिंस्रं[1] शरारु[2]-घातुकौ[3] ॥५४६॥

## ❋ हिंसानामानि ❋

अथ हिंसा[1] वधो[2] घातो-[3], व्यापादनं[4] प्रमापणम्[5] ।
विबर्हणं[6] निस्तर्हणं[7], निर्ग्रन्थनं[8] निषूदनम्[9] ॥५४७॥

प्रोज्जासनं[10] प्रवासनं[11], समापन-[12] मपासनम्[13] ।
विशरणं[14] विशारणं[15], विशसनं[16] च वर्जनम्[17]॥५४८॥

प्रतिघातन-[18] मुन्मथो[19], क्राथो[20] निष्कारणं[21] पुनः ।
आलम्भ[22] श्च निशुम्भ[23] श्च, प्रशमनं[24] परासनम्[25] ॥५४९॥

उद्वासन[26] स्तथा पिञ्ज [27], निर्वापण[28] निर्यातनम्[29] ।
प्रमय[30] श्चापि संक्षप्ति [31], मार:[32] प्रमथनं[33] तथा ॥५५०॥

कदनं[34] क्षणनं[35] चैव, ज्ञेय-निर्वासनं[36] तथा ।
स्यात् कर्त्तनं[1] तथा छेद.[2],

## ❋ आततायिनामानि ❋

कल्पनं[3] वर्धनं[4] पुन· ॥५५१॥

अथ घातोद्यत:[1] स्याद् वै, आततायी[2] च षड्विधः ।
अग्निदो[1] गरद[2] श्चैव, शस्त्रपाणि[3] र्धनावहः[4] ॥५५२॥

क्षेत्रहर[5] स्तथा दारहरो[6] वै आततायिन ।
स शीर्षच्छेदिक:[1] शीर्षच्छेद्यो[2] यो वधमर्हति ॥५५३॥

## ❋ मृतनामानि ❋

अथो मृतः[1] प्रमीत[2] श्च, परेता[3] ऽपगतौ[4] तथा ।
प्रेत[5] श्चाऽऽलेख्यशेष[6] श्च, नामशेष[7] स्तथैव च ॥५५४॥

यशःशेषो[8] पसम्पन्नौ[9], व्यापन्न[10] श्चापि संस्थित [11] ।
परासु[12] श्चेति शब्दाः वैं, प्रख्याता मृतवाचकाः ॥५५५॥

मृताहे दीयते दानमौर्ध्वदेहिकनामकम्[1] ।
अपस्नानं[1] मृतस्नान[2], तिलापः[1] पितृतर्पणम् ॥५५६॥

चिति[1] श्चित्या[2] चिता[3] ज्ञेया,
ऋजुः[1] स्यात् प्राञ्जलो[2] ऽञ्जस·[3] ।
दक्षिण[1]- सरला[2] दाराः[3], निवृत[1] स्तु शठ[2] स्तथा ॥५५७॥

अनृजु[3] श्चापि शण्ठ[4] स्यात्, क्रूरे[1] पाप:[2] नृशंसक[3] ।
निस्त्रिंश[4] श्चापि धूर्त[1] स्तु, वञ्चको[2] व्यसक[3] स्तथा ॥५५८॥

कुहको[4] जालिको[5] मायी[6], दाण्डाजिनिक[7] उच्यते ।
मायावी[8] मायिक[9] श्चेति, ज्ञातव्या धूर्तवाचका: ॥५५९॥

शाठ्यं[1] स्यात् शठता[2] माया[3], कुसृति[4] र्निकृति[5] पुन ।
कपटं[1] कैतवं[2] कूटं[3], मिषं[4] लक्षं[5] तथा छलम्[6] ॥५६०॥
उपाधि[7] रुप[8] धिश्छद्म[9], व्याजो[10] व्यपदेशो[11] निभम्[12] ।
उपधा[13] चेति मन्तव्या:, कपटस्यैव वाचका: ॥५६१॥

अथ स्याद् दम्भचर्या[1] च, कुक्कुटि:[2] कुहना[3] तथा ।
वञ्चनं[1] च व्यलीकं[2] चा-ऽतिसन्धानं[3] प्रतारणम्[4] ॥५६२॥

अथाऽऽर्य[1] श्चापि साधु:[2] स्यात्, सभ्य[3] श्च सज्जन[4] स्तथा ।
दोषैकदृक्[1] पुरोभागी[2], विद्वद्भि: कथ्यते किल ॥५६३॥

अथ कर्णेजप:[1] क्षुद्रो[2], द्विजिह्वो[3] दुर्जन:[4] खल:[5] ।
प्रखल[6] पिशुनो[7] नीच:[8], स्यान् मत्सरी[9] च सूचक:[10] ॥५६४॥

व्यसना[1] र्त्तोपरक्तौ[2] वै,

## ※ चोरनामानि ※

भवेच् चोर[1] श्च चोरड:[2] ।
परिमोषी[3] परास्कन्दी[4], दस्यु[5] श्च प्रतिरोधक[6] ॥५६५॥

तथैकागारिक[७] स्तेनो[८], मलिम्लु च[९] श्च तस्कर[१०] ।
पाटच्चरो[११] ऽपि चोर[१२] श्च, पाट[१३]-रात्र[१४] चरस्तथा ॥५६६॥

पटचोरो[१५] ऽपिनामास्ति, तथैव पारिपन्थिक.[१६] ।
पश्यतो यो हरेदर्थं, चोर स पश्यतोहर[१] ॥५६७॥

❀ चौर्यनामानि ❀

स्याच् चौर्यं[१] चौरिका[२] चैव, स्तेय[३] स्तैन्य[४] तथैव च ।
धनमपहृत लोप्त्रं[१], विबुधैः कथ्यते खलु ॥५६८॥

अथ दैवपरो[१] दैव-वादी[२] दैवप्रमाणक[३] ।
यद्भविष्योऽपि नामास्य, विद्वद्भि र्मन्यते किल ॥५६९॥

❀ आलस्यनामानि ❀

अथाऽऽलस्यो[१] ऽलसो[२] ऽनुष्ण[३], तुन्दपरिमृज[४] स्तथा ।
शीतक[५] श्चापि मन्दः[६] स्याद्,

❀ दक्षनामानि ❀

दक्ष[१] स्तु पेशलः[२] पटुः[३] ॥५७०॥
उष्णो[४]ष्णकौ[५] च सूत्थान.[६] चतुर[७] श्चाथ तत्परः[१] ।
आसक्तः[२] प्रसितः[३] प्रह्वः[४], प्रवण[५] श्च परायण[६] ॥५७१॥

❀ उदारनामानि ❀

अथोदार[१] श्च दाता[२] वै, दानशौण्डो[१] बहुप्रद[२] ।
तथैव स्थूललक्षो[३] ऽपि, कथ्यते कोविद किल ॥५७२॥

## ❀ दाननामानि ❀

अथ दानं[१] तथा त्याग:[२], प्रतिदानं[३] प्रदेशनम्[४] ।
उत्सर्जनं[५] विसर्जनं[६], वितरण[७] विहायितम्[८] ।।५७३।।

तथा निर्वापरण[९] निर्वपणं[१०] प्रादेशनं[११] पुन ।
अहति[१२] स्पर्शन[१३] विश्राणन[१४] स्याच व्रारवजनम्[१५] ।।५७४।।

## ❀ याचक नामानि ❀

सुष्कलो[१] ऽर्थव्ययश्च स्याद्, वनीपक[१] स्तु मार्गणः[२] ।
तर्कुको[३] याचक[४] श्चाऽर्थी[५], याचनक[६] स्तथैव च ।।५७५।।

अथाऽर्थना[१] याचना[२] याञ्चा[३], भिक्षणा[४] ऽध्येषणा[५] ऽर्दना[६] ।
एषणा[७] प्रणय[८] श्चापि, मार्गणा[९] च सनि[१०] स्तथा ।।५७६।।

अभिलाषो[११] ऽभिषस्ति[१२] श्च, नामानि याचकस्यवै ।
अथ स्यादुत्पतिष्णु[१] वैं, तथाप्युत्पतिता[२] खलु ।।५७७।।

मण्डनो[१] ऽलङ्कारिष्णु[२] स्याद्, भूष्णु[१] स्तु भाविता[२] तथा ।
भविष्णु[३] र्वर्त्तन[१] स्तु वैं, वर्तिष्णु[२] कथ्यते बुधैः ।।५७८।।

विसृमरो[१] प्रसारी[२] स्याद, विसारो[३] च विसृत्वर:[४] ।
जज्जाशीलो[१] ऽपत्रपिष्णु[२], लज्जालु[३] श्च निगद्यते ।।५७९।।

क्षमी[१] स्यात् क्षमिता[२] क्षन्ता[३], सहिष्णु[४] सहन[५] स्तथा ।
तितिक्षु[६] श्च तितिक्षा[१] तु, क्षान्ति[२] श्चसहनं[३] क्षमा[४] ।।५८०।।

ईर्ष्यालु.[1] कुहनो[2] ज्ञेय, ईर्ष्या[1] ऽक्षान्ति[2] स्तथा स्मृतः ।
क्रोधनः[1] कोपन.[2] क्रोधी[3], रोषण[4] श्चाप्यमर्षणः[5] ।।५८१।।

अत्यन्तकोपनो[1] लोकः, चण्ड[2] श्चेति निगद्यते ।
क्षुधितो[1] जिघत्सु[2] राख्यातो, बुभुक्षितो[3] ऽशनायितः[4] ।।५८२।।

## ※ क्षुधानामानि ※

बुभुक्षा[1] तु क्षुधा[2] क्षुत्[3] च, रोचक[4] श्च रुचि[5] स्तथा ।
अशनाया[6] जिघत्सा[7] च, बुभुक्षा-वाचका अमी ।।५८३।।

## ※ पिपासुनामानि ※

तर्षित[1] स्तृषित[2] स्तृष्णक्[3], पिपासुः[4] स्यात् पिपासितः[5] ।
तृष्णा[1] तु तृट्[2] तृषा[3] तर्ष[4], पान[5] तथाऽपलासिका[6] ।।५८४।।

उदन्या[7] च पिपासा[8] च, धीति[9] श्चेति तृषा. स्मृताः ।
शोषण[1] स्याद् रसादानं[2], भक्षक[1] स्यात् तु घस्मरः[2] ।।५८५।।

आशित[3] आशिर[4] श्चापि, अद्मर श्चेति भक्षका ।

## ※ अन्ननामानि ※

अथान्न[1] मोदनो[2] ऽन्ध[3] श्च, दीदिवि[4] श्च प्रसादनम्[5] ।।५८६।।

याजो[6] नाजो[7] ऽशन[8] भिस्सा[9], भक्त[10] जीवनक[11] तथा ।
कूरं[12] च दग्धिका[1] चैवं, भिस्सटा[2] मन्यते बुधै· ।।५८७।।

माण्ड[1] सर्वरसाग्र[2] स्यात्, मस्तु[1] च दधिज[2] भवेत् ।
भक्तोत्थाखय आख्याता निःस्रावा[1]-ऽऽचाम[2]-भासरा[3] ।।५८८।।

भक्तमण्डं[1] प्रसाव[2] श्च, प्रस्रवा[3]-ऽऽच्छोदना[4]-ऽऽस्रवाः[5] ।

## ❋ श्राणानामानि ❋

श्राणा[1] सैव विलेपी[2] स्यात्, तरला[3] तरलं[4] तथा ॥५८९॥

यवागू[5] रुष्णिका[6] लोके, यवानां पाकतो भवेत् ।

## ❋ सूपस्यनामानि ❋

सूप[1] श्च प्रहित[2] श्चापि, सूदो[3]ऽपि द्विदलान्नकम् ॥५९०॥

व्यञ्जनं[1] घृतशाकादि, तिलान्ने कृसरो[1] भवेत् ।
त्रिसरोऽपि तिलान्नस्य, नामास्ति व्यवहारतः ॥५९१॥

## ❋ पूपस्यनामानि ❋

पिष्टकः[1] पारिशोल[2] श्च, पूपो[3] ऽपूप[4] इति स्मृतः ।

## ❋ पूलिका (पूरो) नामानि ❋

पूलिका[1] पोलिका[2] पोली[3], पूपिका[4] पूपली[5] तथा ॥५९२॥

घृतपक्वो भवेत् पौलि[1], रभ्यूषो[2] ऽभ्योष[3] एव च ।

## ❋ तेमननामानि ❋

तेमनं[1] क्नोपनं[2] तद्वत्, निष्ठान[3] मुपसेचनम् ॥५९३॥

### ❀ करम्बनामानि ❀

करम्ब[1] श्च करम्भ[2] श्चः, दधिसक्तु[3] रपीष्यते ।

### ❀ घार्त्तिकनामानि ❀

घार्त्तिको[1] घृतपूर[2] श्च, पिष्टपूरो[3] घृतवर.[4] ॥५६४॥

चमसी[1] चमस[2] श्चापि, पिष्टवर्त्ति[3] रपीष्यते
वटको[1] वटक[2] श्चाव-पैकिम[3] श्च निगद्यते ॥५६५॥

ईण्डेरिका[1] च वटिका[2], लघ्वी सा यदि क्रियते ।

### ❀ रोटिकानाम ❀

शष्कुली[1] भोजने सौम्या, तथा स्यादर्धलोटिका[2] ॥५६६॥

### ❀ पर्पटानाम ❀

पर्पटा॰[1] मर्मराला[2] श्च, घृताण्डी[1] तु घृतौषणी[2] ।

### ❀ मोदकनामानि ❀

मोदको[1] लड्डुक[2] श्चाति-स्वादवान् सिहकेसरः[1] ॥५६७॥

भृष्टा यवा स्तु धाना[1] स्यु, धानाचूर्णानि[1] सक्तवः[2] ।

### ❀ चिपिटनाम ❀

चिपिटः[1] पृथुक[2] श्चैव, चिपिटकोऽपि कथ्यते ॥५६८॥

भृष्टधान्यानि लाजाः[1] स्यु रक्षता.[2] शालिसारभाक् ।
उद्धूषो[3] भरुजो[4] ज्ञेयः, खटिका[5] परिवारक[6] ॥५६९॥

गोधूमचूर्णः[1] समिता[2], यवक्षोद[1] स्तु चिक्कस.[2] ।
गुड[1] इक्षुरसक्वाथ[2], सितोपला[1] तु शर्करा[2] ॥६००॥
सिता[3] च मधुधूलि[1] स्तु, खण्डं[2] खण्डो[3] ऽपि कथ्यते ।
मत्स्यण्डिका[1] तु मत्स्यण्डी[2],
मत्स्याण्डिका[3] च फाणितम्[4] ॥६०१॥
मत्स्याण्डी[5] चेक्षुरसत, सामान्य शर्कराभिदा ।

## ※ शीखण्डनामानि ※

शिखरिणी[1] रसाला[2] च, मर्जिता[3] मार्जिता[4] तथा ॥६०२॥
शीखण्डं कथ्यते लोके, यू[1] यूष[2] श्च रसो[3] ऽन्यथा ।

## ※ दुग्धनामानि ※

दुग्धं[1] च गोरस.[2] क्षीरं[3], पुंसवन[4] च सोमजम्[5] ॥६०३॥
ऊधस्य[6] ममृतं[7] गव्यं[8] स्तन्यं[9] योग्यं[10] रसोत्तमम्[11] ।
बालसात्म्यं[12] मधुज्येष्ठं[13],
जीवनीयं[14] सरं[15] रसम्[16] ॥६०४॥
पय[17] श्चेत्यादि नामानि, दुग्धस्य कथ्यते बुधै ।
पयस्यं[1] दधि दुग्धोत्थं, वस्तुजातं निगद्यते ॥६०५॥
पीयूषं[1] नव दुग्धं स्यात्, पेयूष[2] श्चापि कथ्यते ।
किलाटी[1] कूर्चिका[2] चाथ, कूचिका[3] दुग्धजा स्मृता । ६०६॥

### ❊ पायसनामानि ❊

परमान्न[1] ञ्च क्षैरेयी[2], पय. पक्वं हि पायसम्[3] ।

### ❊ दधिनामानि ❊

क्षीरजं[1] गोरस[2] श्चैव, मङ्गल्यं[3] श्रीघन[4] दधि[5] ॥६०७॥

अघनं दधि द्रप्सं[1] स्यात्, द्रप्स्यं[2] पत्रल[3] मित्यपि ।

### ❊ घृतनामानि ❊

घृत[1] माज्यं[2] हवि.[3] सर्पि·[4],
तथाऽऽधारो[5] हविष्यकम्[6] ॥६०८॥

ह्यो गोदोहस्य विकारे तु, हैयङ्गवीन[1] मुच्यते ।

### ❊ नवनीतनामानि ❊

शरजं[1] दधिसार[2] ञ्च, तक्रसार[3] नवोद्धृतम्[4] ॥६०९॥

नवनीत[5] ञ्च पञ्चैव, घृतोत्पत्ति कराणि वै ।

### ❊ तक्रनामानि ❊

अरिष्टं[1] गोरसो[2] घोलं[3], कालशेयं[4] रसायनम्[5] ॥६१०॥

दण्डाहतं[6] षडेतानि, पठ्यन्ते तक्रनामनि ।

उदश्वित्[1] त्वर्धपानीयं, तक्रं भोजन पाचनम् ॥६११॥

श्वेतं[1] श्वेतरस[2] ञ्चैव, समभागजलं दधि ।
कटवरं[1] सारणं[2] तक्र[3], मर्शोघ्नं[4] परमरसः[5] ॥६१२॥

जलं विनैव मथित, मथित[1] कथ्यते दधि ।
सर्पिषा संस्कृत द्रव्य, सार्पिष्कं[1] कथ्यते जनै ॥६१३॥

दध्नि यत् संस्कृत द्रव्यं, तद् दाधिक[1] मुदाहृतम् ।
दकलावणिक[1] द्रव्यं, लवणोदक संस्कृतम् ॥६१४॥

अर्द्धपानीयवद् दध्ना, संस्कृत वस्तु कथ्यते ।
औदश्वित[1] मौदश्वित्कं[2], लोके सर्वत्र भोजनम् ॥६१५॥

लवणेन संस्कृत द्रव्य, लावणं[1] कथ्यते बुधै ।
उखाया जात मुख्य[1] स्यात्, पैठर[2] पिठरे कृतम् ॥६१६॥

सुसंस्कृत[1] प्रयस्त[2] ञ्च, पक्वान्न चारु कथ्यते ।
सिद्धं[1] राद्ध[2] ञ्च पक्व[3] ञ्च, नाम पक्वस्य वस्तुन ॥६१७॥

भृष्ट[1] भवति तद् वस्तु, यत् पक्व जल मन्तरा ।
अग्नौ पक्वञ्च भूति[1] स्यात्, भटित्र[2] ञ्च भरूटकन्[3] ॥६१८॥

शूल्यं[1] शूलाकृतं[2] मांसं, जानीयात् मांस भक्षकः ।
मांसानाञ्च रस प्रोक्तो, निष्क्वाथो[1] रसक[2] स्तथा ॥६१९॥

प्रणीत[1] मुपसपन्न[2], सिद्धमन्नं रसादिवत् ।
मसृण[1] चिक्कणं[2] स्निग्ध[3], सामान्य स्निग्धवस्तुनि ॥६२०॥

पिच्छिलं[1] विजिलं[2] चापि, विजिविल[3] ञ्च विज्जलम्[4] ।
विजिपिलं[5] सारयुक्त-दधिजं भोजन भवेत् ॥६२१॥

वासितं[1] भावितं[2] धूपैः, पुष्पाद्यै इच सुगन्धिते ।
स्वच्छं कृतं भवेद् वस्तु, संमृष्टं[1] शोधितं तथा ॥६२२॥

॥ काञ्चिकनामानि ॥

काञ्चिकं[1] काञ्जिकं[2] चुक्रं[3], कुञ्जलं[4] कुण्डगोलकम्[5] ।
कुल्माषाभिषुतः[6] शुक्तं[7], कुल्माषं[8] तुषोदकम्[9] ॥६२३॥
आरनालं[10] सुवीराम्लं[11], धान्याम्लं[12] च महारसम्[13] ।
अवन्तिसोमं[14] सौवीरं[15], रक्षोघ्नं[16] मधुरा[17] तथा ॥६२४॥
उन्नाहं[18] चापि धातुघ्नं[19], शुक्लं[20] चाऽभिषुतं[21] पुनः ।
गृहाम्बु[22] चेति नामानि, कथ्यन्ते पण्डितैः जनैः ॥६२५॥

॥ तैलस्यनामानि ॥

तैलं[1] स्नेहो[2] म्रक्षणं[3] च, कथ्यते ऽभ्यञ्जनं[4] तथा ।

॥ उपस्करस्यनामानि ॥

वेषवारो[1] वेसवारो[2], वेशवार[3] उपस्करः[4] ॥६२६॥

॥ तिन्तिडीकस्यनामानि ॥

तिन्तिडीकं[1] तथा चुक्रं[2], वृक्षाम्लम्[3] अम्लवेतसः[4] ।

॥ हरिद्रा नामानि ॥

हरिद्रा[1] वरवर्णिनी[2], निशा[3] पीता[4] च काञ्चनी[5] ॥६२७॥

रात्रि वाचक शब्दा ये, हरिद्रा नामत स्मृता ।

❀ राजिकानामानि ❀

क्षुताभिजनन [1] क्षव [2], राजिका [3] राजसर्षप [4] ॥६२८॥
असुरी [5] कृष्णिका [6] चापि, व्यञ्जने स्वादकारिणी ।

❀ धान्याकस्यनामानि ❀

कुस्तुम्बरु [1] च धन्याक [2], धान्याक [3] धान्यक [4] तथा ॥६२९॥
धन्या [5] नामापि तस्यास्ति, ज्ञायता मल्लुका [6] पुन ।

❀ मरीचनामानि ❀

मरीचं [1] मरिचं [2] कृष्ण [3], धार्मपत्तन [4] सूषण [5] ॥६३०॥
कोलक [6] बलित [7] चापि, वेल्लज [8] यवनप्रियम् [9] ।
द्वारवृत्तं [10] दर्शतानि, कृष्णनामानि कथ्यते ॥६३१॥

❀ शुण्ठीनामानि ❀

शुण्ठी [1] शुण्ठि [2] स्तथा विश्वा [3], नागरं [4] विश्वभेषजम् [5] ।
तथा महौषध [6] विश्वे, कथ्यते कोविदै किल ॥६३२॥

❀ पिप्पलीनामानि ❀

पिप्पली [1] पिप्पलि [2] कृष्णा [3], कोला [4] च कृष्णतण्डुला [5] ।
उपकुल्या [6] कणा [7] शौण्डी [8], वैदेही [9] तीक्ष्णतण्डुला [10] ॥६३३॥

ऊषणा[11] चोषणा[12] चापि चपला[13] मागधी[14] तथा।
हि तण्डुलफला[15] चेति, कृष्णानामानि कथ्यते ॥६३४॥

## ※पिप्पलीमूलनामानि※

पिप्पलीमूल[1] मित्येकं, ग्रन्थिकं[2] चटकाशिरः[3]।
सर्वग्रन्थिक[4] मित्येवं, नाम ज्ञेय चतुष्टयम् ॥६३५॥

## ※ त्रिकटुनामानि ※

त्र्यूषणं[1] त्रिकटु[2] व्योष[3], त्रिकटुक ञ्च कथ्यते।

## ※ जीरकनामानि ※

जीर[1] श्च जीरको[2] ऽजाजी[3],
जरणो[4] जीरण[5] कणा[6] ॥६३६॥

## ※ हिङ्गुनामानि ※

बाह्लीकं[1] जतुक[2] हिङ्गुः[3], सहस्रवेधि[4] रामठम्[5]।
अत्युग्रा[6]-ऽगूढगन्धे[7] च, कथ्यते भूतनाशनम्[8] ॥६३७॥

## ※ भक्षणनामानि ※

भक्षणं[1] जक्षणं[2] जग्धि[3], जेमनं[4] जमन[5]घसि.[6]।
आहारो[7] ऽभ्यवहार[8] श्च, भोजन[9] जमनं[10] तथा ॥६३८॥

अवष्वाण[11] श्च विष्वाणो[12],
लेहो[13] न्याद[14] श्च खादनम्[15]।

अदन[१६] स्वदनं[१७] प्सानं[१८],
निघस[१९] श्चापि वल्भनम्[२०] ॥६३९॥

अशनं[२१] प्रत्यवसान[२२], चेति नामानि वै घसेः ।

### * चर्वणनाम *

कथ्यते चूर्णनं तज्ज्ञै, श्चर्वणं पण्डितै र्जनैः ।

### * लेहननाम *

जिह्वास्वादो हि शब्दोऽपि, कथितं लेहनं पुनः ॥६४०॥

### * प्रातःकालिक भोजननाम *

प्रात.कालघसे नाम, प्रातराशो[१] हि कथ्यते ।
पुनरपि कल्यवर्त्तः[२], सग्धि[१] स्तु सहभोजनम्[२] ॥६४१॥

### * ग्रासनामानि *

ग्रासो[१] गुड[२] श्च गण्डोलो[३], गडोल[४] श्च गुडेरक.[५] ।
कवकः[६] कवल[७] पिण्ड[८],-श्चेत्यादि ग्रासनामका ॥६४२॥

### * तृप्तनामानि *

आघ्रातः[१] सुहित[२] स्तृप्त[३], आघ्राण[४] श्चाशित[५] पुनः ।

### * तृप्तिनामानि *

सौहित्य[१] तृप्ति[२] राघ्राणं[३], भोजनै यते ॥६४३॥

## ❋ उच्छिष्टनामानि ❋

भुक्तोच्छिष्ट[1] ञ्च पिण्डोलि:[2], फेला[3] भुक्तसमुज्झितम्[4] ।
फेलि[5] रित्यपि नामास्ति, भुक्त्वा व्यक्तस्य वस्तुन ।।६४४।।

## ❋ उदरम्भरिनामानि ❋

स्वोदरपूरक[1] श्चापि, कुक्षिम्भरि[2] स एव च ।
उदरम्भरि[3] राख्यात, आत्मम्भरि[4] निकृष्टक: ।।६४५।।

आद्यून[1] औदरिक[2] श्च, बुभुक्षा पीडितो जन. ।
सर्वान्नभक्षक[1] श्चैव, सर्वान्नीन[2] श्च कथ्यते ।।६४६।।
उदरपिशाचो[3] नाम, सर्वं भुङ्क्ते हि सर्वभुक् ।

## ❋ मासभक्षकनामानि ❋

पिशिताशी[1] च शाष्कुल[2], शौष्कलो[3] मांसभक्षक ।।६४७।।

## ❋ उन्मत्तनाम ❋

उन्मादसयुत[1] प्रोक्त,-मुन्मदिष्णु[2] स्तथापि वै ।

## ❋ लुब्धनामानि ❋

लुब्ध[1] श्च लोलुपो[2] लोलो[3], लोलुभ[4] श्चाभिलाषुक[5] ।।६४८।।
लम्पटो[6] लालसो[7] लिप्सु:[8], गृध्नु[9] श्च गर्धन[10] स्तथा ।
तृष्णक्[11] चेत्यादि नामानि, लुब्धस्य कथ्यते बुधै ।।६४९।।

## * लोभनामानि *

लोभ[1] स्तृष्णा[2] स्पृहा[3] लिप्सा[4],
गर्द्धः[5] काङ्क्षा[6] वश[7] स्तथा ।
आशा[8] वाञ्छा[9] धनाया[10] च,
रुचिः[11] काम[12] श्च कामना[13] ॥६५०॥

आशंसा[14] चाऽभिलाष[15] स्तृट्[16],
चेच्छा[17] चेहा[18] मनोगवी[19] ।
ईप्सा[20] चेहो[21] मनोराज्य[22],
प्रोक्तं मनोरथ[23] स्तथा ॥६५१॥

## * अभिध्यानामानि *

अभिध्या[1] च परस्वेहा[2], तथैव विषमस्पृहा[3] ।
प्रोक्तं परधनेच्छायां, विषमप्रार्थना[4] पुनः ॥६५२॥

## * उद्धतस्यनाम *

उद्धत[1] श्चाऽविनीत[2] श्च, द्वयं सदा प्रयुज्यते ।

## * विनीतनामानि *

विनीतो[1] निभृत[2] श्चैवं, प्रश्रितो[3] विनयी जनः ॥६५३॥

## * विधेयनाम *

विनयस्थो[1] विधेय[2] श्च, शास्त्रसंस्कारवान् जनः ।
वश्यः[1] प्रणेय[2] आख्यात आश्रवो वचने स्थितः ॥६५४॥

## * धृष्टनामानि *

धृष्टो[1] धृष्णु[2] र्वियात[3] श्च, धृष्णक्[4] निर्लज्ज उच्यते ।

## * विलक्षनाम *

विक्षापन्नो[1] विलक्ष[2] श्च, विस्मयेन समन्वितः । ६५५ ।।

## * अधृष्टनामानि *

शालीनः[1] शारद[2] श्चाथ, कथ्यते ऽधृष्ट[3] एव हि ।

## * शुभसयुक्तनाम *

शुभयुः[1] शुभसयुक्त, श्चेति माङ्गलिक किल ।।६५६।।

## * अहङ्कृतनामानि *

अथाऽहंयु[1] रहंकारी[2], कथ्यते ऽहङ्कृतः[3] पुनः ।

## * कामुकनामानि *

कमिता[1] कामुक[2] कम्र[3], कामनः[4] कमनो[5] ऽनुकः[6] ।।६५७।।

कामयिता[7] ऽभिको[8] ऽभीक[9], कमर[10] श्चापि कथ्यते ।

## * विप्लुतनामानि *

विप्लुतः[1] पञ्चभद्र[2] श्च, व्यसनी[3] कथितं पुनः ।।६५८।।

## * हर्षमाणनामानि *

हर्षमाणो[1] विकुर्वाण[2], प्रमना[3] हृष्टमानसः[4] ।

### * विचेतानामानि *

अन्तर्मना:[1] विचेता[2] श्च, विमना:[3] दुर्मना अपि ॥६५९॥

### * मत्तनामानि *

मत्त:[1] शौण्ड[2] स्तथा क्षीब:[3], उत्कट[4] श्चापि कथ्यते ।

### * उत्सुकनामानि *

उन्मना[1] उत्सुक[2] उत्क[3], उत्कण्ठित[4] स्तथोच्यते ॥६६०॥

### * निन्दितनामानि *

अभिशस्त[1] स्तथा वाच्य:[2], क्षारित[3] श्चापि दूषित[4] ।
आक्षारित:[5] प्रयुक्तोऽस्ति, सर्वत्र निन्दिते जने ॥६६१॥

### * कृतलक्षणनाम *

आहतलक्षण:[1] ख्यातो, गुणवान् कृतलक्षण[2] ।

### * निर्लक्षणनाम *

निर्गुण: पाण्डुरपृष्ठो[1], निर्लक्षण[2] श्च कथ्यते ॥६६२॥

### * अस्थिरनाम *

संङ्कसुको[1] ऽस्थिर.[2] शब्द, श्चपले च भवेद् द्वयम् ।

### * मूकनाम *

तूष्णींशील[1] श्च तूष्णीक.[2], मूकार्थे कथ्यते बुधै ॥६६३॥

❀ दुष्टबुद्धिमाननाम ❀

अनिष्टदुष्टधी[1] श्चापि, विवशो[2] दुष्टबुद्धिमान् ।

❀ बद्धनामानि ❀

बद्धो[1] नद्ध[2] श्च यन्त्रित[3], कीलित[4] संयत[5] सितः[6] ॥६६४॥

तथा सन्दानित[7] श्चापि, प्रोक्तं निगडितः[8] किल ।

❀ बन्धननाम ❀

उद्दान[1] बन्धनं[2] चेति, बन्धनस्य हि नाम वै ॥६६५॥

❀ हतनामानि ❀

हतः[1] स्याद् प्रतिबद्ध[2] श्च, प्रतिहतो[3] मनोहत[4] ।

❀ तिरस्कृतनाम ❀

अधिक्षिप्त[1] प्रतिक्षिप्तः[2], तिरस्कृत जनो भवेत् ॥६६६॥

निष्कासितो[1] ऽवकृष्ट[2] श्च, निस्सारितो[3] ऽपि कथ्यते ।
आत्तगन्धो[1] ऽभिभूत[2] श्च, पराभूत जनो भवेत् ॥६६७॥

न्यक्कृतो[1] धिक्कृत[2] श्चापि, स्यादपध्वस्त[3] एव सः ।
आत्तगन्धो[4] ऽपि तस्यैव, नामास्ति व्यवहारत. ॥६६८॥

विप्रकृतो[1] निकृतो[2] ऽपि, निस्तेजो हि जनो भवेत् ।

❀ तिरस्कारनामानि ❀

न्यक्कार[1] परिभाव[2] श्च, परिभवः[3] पराभव[4] ॥६६९॥

निकारो[५] विप्रकार[६] श्चा,-ऽत्याकार[७] श्च तिरस्क्रिया[८] ।

कथितो ऽभिभव[९] श्चेति, तिरस्कारार्थ वाचक ॥६७०॥

※ वञ्चितनाम ※

वञ्चितो[१] विप्रलब्ध[२] स्तु, द्वय स्याद् वञ्चिते जने ।

※ निद्रालुनामानि ※

शयालु[१] श्चापि निद्रालु[२], स्वप्नक्[३] च शयनोत्सुके ॥६७१॥

आसनि: शयमानस्तु, घूर्णित[१] प्रचलायित:[२] ।

※ निद्रानामानि ※

निद्राण[१] शायित:[२] सुप्त[३], निद्रां प्राप्तो जनो भवेत् । ६७२॥

※ जागरूकनामानि ※

जागरूको[१] विना निद्रां, जागरिता[२] च जागरी[३] ।

※ जागरणनामानि ※

जागर्या[१] जागरा[२] चापि, जागरण[३] ञ्च जागर:[४] ॥६७३॥

विश्वद्रयड्[१] चापि विष्वद्रयड्[२], सर्वत्र गन्तुको जन ।

सध्र्यड्[१] तु सह गन्ता स्यात्, देवद्रयड्[१] देवपूजक ॥६७४॥

※ तिर्यग्गमननाम ※

तिर्यङ्[१] भवेद् वक्रगामी, खगादौ च प्रयुज्यते ।

## ❀ संशयालुनामानि ❀

संशयालुः[1] सांसयिक.[2], संशायिता जनो भवेत् ।।६७५।।

## ❀ गृहयालुनाम ❀ पतयालुनाम ❀

गृहीता[1] गृहयालुः[2] स्यात्, पतयालु[1] स्तु पातक[2] ।

## ❀ रोचिष्णुनाम ❀

रोचिष्णु[1] कान्तिमान् लोको, रोचन[2] पुनरुच्यते ।।६७६।।

## ❀ दक्षिणार्हनामानि ❀

दक्षिण्यो[1] दक्षिणार्ह[2] श्च, दक्षिणीयो[3] ऽपि कथ्यते ।

## ❀ दण्डितनामानि ❀

दण्डं प्राप्तो दण्डितः[1] स्याद्, दापित[2] साधित[3] स्तथा ।।६७७।।

## ❀ पूज्यनाम ❀

अर्च्य[1] स्तथा प्रतीक्ष्यो[2] ऽपि, द्वयं स्याद् पूज्यवाचक· ।

## ❀ पूजितनामानि ❀

अञ्चितो[1] ऽपचितो[2] ऽर्चित[3],
स्तथाऽपचायितो[4] ऽर्हित[5] ।।६७८।।

नमसितो[6] नमस्यित.[7], पूजित[8] श्चेति पूजित· ।

## ❀ पूजानामानि ❀

अर्चा[1] ऽर्हणा[2] सपर्या[3] स्यात्,
पूजा[4] चाऽपचिति[5] स्तथा ।।६७९।।

❀ उपहारनाम ❀

उपहारो[1] बलि[2] श्चाथ, बलिदाने भवेद् द्वयम् ।

❀ विह्वलनाम ❀

भयभीतो जन ख्यातो, विक्लवो[1] विह्वल[2] स्तथा ॥६८०॥

❀ स्थूलनामानि ❀

स्थूल[1] पीवा[2] च पीन[3] श्च, पीवरः[4] स्यात् तथैव च ।

❀ चक्षुष्यनाम ❀

चक्षुष्य[1] सुभगो[2] नाम, सुन्दरस्य च वस्तुनः ॥६८१॥

❀ द्वेष्यनाम ❀

अक्षिगत[1] स्तथा द्वेष्यो[2], द्वेष्ये वस्तुनि कथ्यते ।

❀ पुष्टनामानि ❀

अंसल[1] श्चापि निर्दिग्धो[2], मांसलो[3] बलवान्[4] बली[5] ॥६८२॥

उपचितो[6] ऽपि सर्वत्र, कथ्यते पुष्टवाचक ।

❀ दुर्बलनामानि ❀

अमांसो[1] दुर्बल[2] क्षाम[3], कृशः[4] क्षीण[5] स्तनु[6] स्तथा ॥६८३॥

तलिन[7] पेलव[8] श्छात,-श्चेति दुर्बलवाचका ।

❀ तुन्दिलनामानि ❀

पिचिण्डलो[1] बृहत्कुक्षि[2],-स्तुन्दी[3] तुन्दिक[4]-तुन्दिलो[5] ॥६८४॥

उदरी[6] तुन्दिभ[7] श्चोद-रिक:[8] उदरिल[9] स्तथा ।

❀ अनासिकनामानि ❀

अनासिक[1]-श्च विग्र[2] श्च, विख्[3] श्च विखु[4] रित्यपि ॥६८५॥

❀ चिपिटनासिकस्यनामानि ❀

अवनाटो[1] ऽवटीट[2] श्चा,-ऽवभ्रटो[3] नतनासिके ।
चिपिटो[4] नम्रनासिक-श्चेति चिपिटनासिके ॥६८६॥

❀ तीक्ष्णनासिकस्यनाम ❀

स्यात् तीक्ष्णनासिकावान् वै, खरणा[1] श्च खरणस:[2] ।

❀ लघुनासिकस्यनाम ❀

तथा लघुनासिकावान्, न: क्षुद्र:[1] क्षुद्रनासिक[2] ॥६८७॥

कथ्यते विकटघोण[1], खुरणा[2] श्च खुरणस.[3] ।
उन्नस[1] उ.नासिकोऽपि, कथ्यते उन्ननासिके ॥६८८॥

❀ पगुनामानि ❀

पंगु[1] श्रोण[2] पगुलश्च[3], पीठसर्पी[4] तथैव च ।

❀ खल्वाटनामानि ❀

खलति[1] श्चापि खल्वाट[2], खलत[3] ऐन्द्रलुप्तिक.[4] ॥६८९॥

वभ्रु[5] श्च शिपिविष्ट[6] श्च, कथ्यते पण्डितै रिह ।

❀ काणस्यनामानि ❀

एकाक्ष:[1] कनन[2] काण[3], एकदृक्[4] चापि कथ्यते ॥६९०॥

### ❀ किरातनामानि ❀

अल्पतनु[१] श्च पृश्नि[२] स्यात्, किरातो[३] लघुदेहवान् ।

### ❀ कुब्जनामानि ❀

कुब्ज[१] श्च गडुलो[२] न्युज[३], त्रीणि नामानि सन्ति वै ॥६९१॥

### ❀ कुणिनाम ❀

कुणि[१] स्तु कुकर[२] श्चापि, कथ्यते कुणिनामनि ।

### ❀ वामननामानि ❀

खर्व[१] श्च खर्वशाख[२] श्च, निखर्व:[३] खट्टन[४] स्तथा ॥६९२॥

ह्रस्व[५] श्च वामन[६] श्चेति, कथ्यते ह्रस्वबोधने ।

### ❀ बधिरनामानि ❀

एडो[१] ऽकर्ण[२] श्च बधिर[३], श्रुतिविकल[४] इत्यपि ॥६९३॥

### ❀ दुश्चर्मनामानि ❀

वण्ड[१] श्च शिपिविष्ट[२] स्याद्, दुश्चर्मा[३] च छिन्नक[४] ।

### ❀ खञ्जनामानि ❀

खञ्ज[१] श्च खञ्जक[२] खोर[३], खोड[४] श्चेत्यपि कथ्यते ॥६९४॥

### ❀ विकलाङ्गनाम ❀

पोगण्डो[१] हीन देहोऽस्ति, विकलाङ्गो[२] ऽपि स भवेत् ।

### ❀ ऊर्ध्वजानुकनामानि ❀

ऊर्ध्वज्ञः[1] पुरुषो ज्ञेय,-उध्वज्ञु[2] रूर्ध्वजानुकः[3] ।।६९५।।

### ❀ विरलजानुकनामानि ❀

विरलजानुक[1] प्रज्ञः[2], प्रज्ञु[3] श्चेत्यपि मन्यताम् ।

### ❀ युतजानुनामानि ❀

राज्ञुः[1] सज्ञ[2] श्लिष्टजानु, र्युतजानु[3] श्च कथ्यते ।।६९६।।

### ❀ वलिननाम ❀

वलिनो[1] वलिभः[2] कोऽपि, दग्धचर्मा जनो भवेत् ।

### ❀ दन्तुरनाम ❀

उदग्रदन्[1] दन्तुर[2] स्याद्, यस्य दन्ता बहि स्थिताः ।।६९७।।

### ❀ मुष्करनाम ❀

मुष्कर[1] श्च प्रलम्बाण्डो[2] जनो लम्बाण्ड उच्यते ।

### ❀ अन्धनामानि ❀

गताक्षो[1] ऽनेडमूको[2] ऽन्ध[3], श्चक्षुर्विकल[4] उच्यते ।।६९८।।

### ❀ उन्मुखनाम ❀

उत्पश्य[1] कथ्यते सोऽत्र, यस्तिष्ठेदुन्मुख[2] सदा ।

### ❀ अधोमुखनामानि ❀

अवाङ्[1] न्युब्ज[2] श्च विज्ञेय, सर्वत्राऽधोमुखो[3] जन ।।६९९।।

### ❋ मुण्डनाम ❋

मुण्ड[1] श्च मुण्डितो[2] नाम, केशरहित उच्यते ।

### ❋ केशिकनामानि ❋

केशव.[1] केशिकः[2] केशी[3], केशवान् कथ्यते जन ॥७००॥

### ❋ केकरनाम ❋

केकरो[1] वलिर[2] श्चेति, प्रोक्तो वक्राक्षिवान् जन. ।

### ❋ तुण्डिभनामानि ❋

तुण्डिलो[1] वृद्धनाभि[2] श्च, तुण्डिभः[3] स्यात् पृथूदरः ॥७०१॥

### ❋ रोगिणोनामानि ❋

आतुरो[1] रोगितो[2] ग्लानो[3], व्याधितो[4] ऽश्यमितो[5] ऽपटुः[6] ।
विकृत[7] आमयावी[8]स्या-दभ्यान्तो[9] ग्लास्नु[10] रेव च ॥७०२॥

दर्द्रुरोगी[1] तु दर्द्रुणो[2], दद्रुरोगी[3] च दद्रुण[4] ।
पामन[1] पामर[2] श्चापि, कच्छुर[3] श्चर्मरोगवान् ॥७०३॥

सातिसार[1] स्तथैवाऽतो-सारकी[2] चातिसारकी[3] ।
वातकी[1] वातरोगी[2] स्यात्, श्लेष्मण[1] श्लेष्मल[2] कफी[3]॥७०४॥

चिल्ल[1] श्च चुल्ल[2] श्च पिल्ल[3] श्च, क्लिन्ननेत्रो[4] ऽक्षि रोगवान् ।
अर्शसो[1] गुदरोगी स्या-दर्शोयुक्[2] चापि कथ्यते ॥७०५॥

मूर्च्छालो[1] मूर्च्छितो[2] मूर्त्तः[3], विसञ्ज्ञ कथ्यते जनः ।
किलासी[1] सिध्मल[2] श्चापि, जनः स्याच्छ्वेतकुष्ठवान् ॥७०६॥

## ❀ पित्तनामानि ❀

पित्तं तथा पलाग्नि[2] श्च, मायु[3] श्च पललज्वरः[4] ।
तथाऽग्निरेचक[5] श्चेति, पित्तनामानि कथ्यते ॥७०७॥

## ❀ कफनामानि ❀

कफ[1] स्तथा बलाश[2] श्च, श्लेष्मा[3] खेट[4] स्तथा खटः[5] ।
शिङ्घानक[6] स्तथा स्नेह-भू[7] श्चेति कफनामकाः ॥७०८॥

## ❀ रोगनामानि ❀

रुगा[1] ऽऽतङ्को[2] रुजा[3] रोगो[4], व्याधि[5] रपाटवं[6] तथा ।
आम[7] आमय[8] आकल्यं[9]-
मान्द्य[10] तथा ऽऽमनं[11] गदः[12] ॥७०९॥
उपताप[13] स्तथैवास्ति, रोगनाम निरूपणे ।

## ❀ क्षयरोगनामानि ❀

राजयक्ष्मा[1] क्षय[2] शोषो[3], यक्ष्मा[4] चापि निगद्यते ॥७१०॥

## ❀ क्षुतस्यनामानि ❀

क्षुत्[1] क्षुत[2] श्च क्षव[3] श्चापि, छिक्का[4] देश्या च मन्यताम् ।

## ❀ कासनाम ❀

कासो[1] विशेष प्रख्यातः, स एव क्षवथु[2] र्भवेत् ॥७११॥

❀ खसनामानि ❀

पामा[1] पामा[2] खस[3] कच्छू[4], विचार्चिका[5] ऽपि कथ्यते ।

❀ कण्डूनामानि ❀

कण्डू[1] खर्जू[2] श्च खर्जूतिः[3], कण्डूति[4] श्च पुनर्भवेत् ॥७१२॥

कण्डूयनं[5] च कण्डूया[6], गात्र कण्डूयने स्मृता ।

❀ व्रणनामानि ❀

ईर्म[1] क्षतं[2] व्रण[3] श्चारु.[4], क्षणनु[5] श्चापि कथ्यते ॥७१३॥

व्रण चिह्नं किणः[1] प्रोक्त-मखशस्त्रादिकस्य च ।

❀ श्लोपदरोगनाम ❀

श्लीपदं[1] पादवल्मीक, पादरोगस्य नाम वै ॥७१४॥

❀ पादस्फोटनाम ❀

शीतादिना समुत्पन्न, पादस्फोटो[1] विपादिका[2] ।

❀ स्फोटकनाम ❀

विस्फोटः[1] स्फोटको[2] गण्डः[3], पिटक[4] श्चापि कथ्यते ॥७१५॥

❀ पृष्ठग्रन्थिनाम ❀

पृष्ठग्रन्थि[1] र्गडु[2] प्रोक्त. पृष्ठग्रन्थिक मित्यपि ।

❀ कुष्ठनामानि ❀

श्वेतं[1] श्वित्रं[2] तथा कुष्ठं[3], पाण्डुरं[4] चेति कुष्ठकम् ॥७१६॥

❀ केशघ्ननाम ❀

वातरोगविशेषः स्यात्, केशघ्नं[1] चेन्द्रलुप्तकम्[2] ।

❀ किलासनामानि ❀

किलासं[1] सिध्मं[2] त्वक्पुष्पं[3], सिध्मं[4] रोग स्तु चर्म्मणः ॥७१७॥

❀ कोठनामानि ❀

मण्डलं[1] रागभेदः स्यात्, कोठो[2] मण्डलकं[3] तथा ।

❀ गण्डमालनाम ❀

गलगण्डो[1] गण्डमालः[2], कण्ठरोगः सदोच्यते ॥७१८॥

❀ गलाङ्कुरनाम ❀

गलरोगो रोहिणी[1] स्याद्, गलाङ्कुर[2] श्च कथ्यते ।

❀ हिक्कानामानि ❀

हेक्का[1] हिक्का[2] च हृल्लासो[3], रोगभेद उदाहृतः ॥७१९॥

❀ पीनसनाम ❀

नासिका रोग भेद स्तु, प्रतिश्याय[1] श्च पीनसः[2] ।

### ❀ शोफनामानि ❀

शोफ[1] श्च श्वयथु[2] शोथ.[3], शरीरं यत्र फुल्लति ॥७२०॥

### ❀ अर्शनामानि ❀

अर्शः[1] स्याच्च दुर्नामा[2], गुदकोलो[3] गुदाङ्कुरः[4] ।

### ❀ वमननामानि ❀

नाम प्रच्छर्दिका[1] छर्दि[2], र्वमनं[3] वमथु[4] र्वमि[5] ॥७२१॥

### ❀ उदररोगनाम ❀

गुल्मः[1] स्यादुदरग्रन्थि[2], रुदावर्तो[1] गुदग्रह[2] ।

नाडीव्रणो[1] गति[2] र्वृद्धि[1], कुरण्ड[2] आण्डवर्धनम्[3] ॥७२२॥

### ❀ अश्मरीनाम ❀

अश्मरी[1] मूत्रकृच्छ्[2] श्च, मूत्राशये च जायते ।

### ❀ प्रमेहनामानि ❀

मेह[1] स्तथा प्रमेह[2] श्च, कथ्यते बहुमूत्रता[3] ॥७२३॥

### ❀ विबन्धनाम ❀

आनाह[1] श्च विबन्ध[2] स्यात्, पुरीषमूत्ररोधने ।

## ❀ ग्रहणीरुकनाम ❀

अतिपुरीषकारी च, ग्रहणीरुक्[1] प्रवाहिका[2] ॥७२४॥

विद्रधि[1] स्तु भगन्दरो[2] ऽर्बुद[3] श्चापि ज्वरादय[4] ।
अनेक व्याधयो लोके, वर्तन्ते दुःखदायकाः ॥७२५॥

## ❀ वैद्यस्यनामानि ❀

भिषग्[1] वैद्य[2] स्तु दोषज्ञ[3] आयुर्वेदी[4] चिकित्सक[5] ।
आयुर्वेदिको[6] नामैव, रोगहारी[7] भवेज्जनः ॥७२६॥

अगदङ्कार[8] नामा ऽपि, लोकेषु कथ्यते जनैः ।

## ❀ औषधनामानि ❀

औषध[1] मगद[2] स्तन्त्रं[3], भैषज्य[4] चापि भेषजम्[5] ॥७२७॥

तथा जायु[6] श्च नामेदं, भेषजस्यैव मन्यते ।

## ❀ चिकित्सानामानि ❀

उपचारश्[1] चिकित्सा[2] स्या,-दुपचर्या[3] रुक्प्रतिक्रिया[4] ॥७२८॥

## ❀ लङ्घननाम ❀

भोजनादि परित्यागो, लङ्घन[1] मपतर्पणम्[2] ।

## ❀ विषवैद्यनामानि ❀

जाङ्गुलिको[1] विषवैद्यो[2], विषभिषक्[3] च कथ्यते ॥७२९॥

## ❀ स्वास्थ्यनामानि ❀

स्वास्थ्य[1] सह्य[2] तथाऽऽरोग्यं[3], वार्तं[4] स्याच्चाप्यनामयम्[5] ।

## ❀ नीरुक्नामानि ❀

पटु[1] वर्त्त[2] स्तथोल्लाघ.[3], कल्यो[4] नीरुक्[5] निगद्यते ॥७३०॥

## ❀ पार्श्वकनाम ❀

उत्कोचे विभवाऽन्वेषी, पार्श्वक[1] सन्धिजीवक.[2] ।

## ❀ कूकुदनामानि ❀

सत्कृत्याऽलङ्कृतां कन्दां, यो ददाति स कूकुद.[1] ॥७३१॥

स एव कूपदः[2] प्रोक्त, पारिमित[3] श्च प्रायश ।

## ❀ चपलनाम ❀

चपल[1] चिकुर[2] श्चेति, नामाऽपि कथ्यते जनैः ॥७३२॥

## ❀ नीलीरागनामानि ❀

नीलीरागः[1] स्थिरप्रेमा[2], तथा स्यात् स्थिरसौहृदः[3] ।

## ❀ हरिद्रारागनाम ❀

हरिद्राराग[1] इत्युक्तः, क्षणिकरागवान् किल ॥७३३॥

## ❀ मेदरनाम ❀

अतिस्नेहेन संयुक्तः, सान्द्रस्निग्ध[1] श्च मेदुर[2] ।

❀ गेहेशूरनामानि ❀

गेहेनर्दी[1] तथा गेहे[1]-पिण्डीशूरौ[2] च कथ्यते ॥७३४॥

❀ धनिनाम ❀

अस्तिमान्[1] च धनी[2] नाम कथ्यते धनवानपि ।

❀ गोष्ठश्वनाम ❀

स्वस्थानस्थः परद्वेषी, गोष्ठश्व[1] कथ्यते बुधैः ॥७३५॥

❀ आपन्ननाम ❀

आपन्न[1] आपदि स्थित, संपन्नो धनवान् जन ।

❀ आपत्तिनामानि ❀

आपत्ति[1] स्याद् विपत्ति[2] श्च,
विपदा[3] ऽऽपत्[4] तथैव च ॥७३६॥

❀ स्निग्धनाम ❀

स्नेहवान् स्निग्ध[1] आख्यातो, वत्सल[2] श्चापि कथ्यते ।

❀ उपाधिनामानि ❀

कुटुम्बपालको लोकः, कुटुम्बव्यापृतो[1] भवेत् ॥७३७॥
अभ्यागारिक[2] नामापि, स उपाधि[3] श्च कथ्यते ।

❀ दीर्घायुनामानि ❀

आयुष्मान्[1] चापि दीर्घायु[2], जैवातृक[3] श्च मन्यते ॥७३८॥

### * त्रासदायीनाम *

त्रासदायी[1] शङ्कर[2] श्च, कथ्यते त्रासदायकः ।

### * शरणार्थिनाम *

शरणार्थी[1] चाभिपन्नः[2], उच्यते शरणागत ॥७३९॥

### * परीक्षकनामानि *

आक्षपटलिक[1] श्चापि, कारणिकः[2] परीक्षकः[3] ।
परीक्षाकारको लोके, कथ्यते कोविदैः किल ॥७४०॥

### वरदनाम *

वरद[1] श्च समर्धुक.[2], वाञ्छितस्य प्रदायकः ।

### * सङ्घजीविनाम *

सङ्घे स्थिता जीविताश्च, व्रातीनाः[1] सङ्घजीविनः॥७४१॥

### * सदस्यनामानि *

पार्षदाः[1] पारिषद्या[2] श्च, सभ्या[3] श्चापि सभासद.[4] ।
सभास्ताराः[5] सदस्या[6] श्च, सामाजिकाः[7] स्मृता समे ॥७४२॥

### * सभानामानि *

सभा[1] संसत्[2] समाज[3] श्च, समज्या[4] समितिः[5] सदः[6] ।

आस्था[७] ऽऽस्थान[८] तथाऽऽस्थानी[९],
पर्षत्[१०] च गरिषद्[११] घटा[१२] ॥७४३॥
गोष्ठी[१३] त्रयोदश नाम समिते, र्नामसग्रहे ।

❀ ज्यौतिषिकनामानि ❀

सांवत्सर[१] श्च दैवज्ञो[२], ज्यौतिषिको[३] निमित्तवित्[४] ॥७४४॥
नैमित्तिक[५] श्च नैमित्तो[६], ज्ञानी[७] कार्तान्तिक[८] स्तथा ।
मौहूर्त्तिक[९] श्च मौहूर्त्त[१०], ईक्षणिको[११] विप्रश्निक[१२]॥७४५॥
आदेशी[१३] गणक[१४] श्चेति, नामानि दर्शितानि वै ।

❀ तान्त्रिकनाम ❀

सैद्धान्तिको[१] हि शास्त्रज्ञः, तान्त्रिको[२] ऽपि च कथ्यते ॥७४६॥

❀ लेखकनामानि ❀

लेखको[१] ऽक्षरचञ्चु[२] श्च, करणो[३] ऽक्षरजीवक[४] ।
तथाऽक्षरचण[५] श्चापि, लिपिकर[६] श्च वर्णिक[७] ॥७४७॥
लिविकर[८] श्च कायस्थो[९], ऽक्षरचुञ्चु[१०] श्च कथ्यते ।

❀ लिपिनामानि ❀

लेख स्याक्षरन्यासो, लिखिता[२] च लिपि[३] र्लिवि[४] ॥७४८॥

❀ मषीभाजननामानि ❀

मषिधानं[1] मषीधानं[2], मषीभाजन[3] मित्यपि ।
मषिकूपी[4] मषीकूपी[5], पात्र मस्या निगद्यते ॥७४६॥

❀ मसीनामानि ❀

मसी[1] मसि[2] श्च मेला[3] च, मलिनम्बु[4] मषी[5] मषि[6] ।

❀ कुलश्रेष्ठिनामानि ❀

कुलक[1] श्च कुलश्रेष्ठी[2], कुलिको[3] ऽपि निगद्यते ॥७५०॥

❀ द्यूतकारकनाम ❀

द्यूतकर्त्ता भवेल्लोके, सभिको[1] द्यूतकारक[2] ।

❀ द्यूतकृत्नामानि ❀

द्यूद्यूतत्[1] कितव[2] प्रोक्तो, धूर्त्तो[3] ऽक्षधूर्त्त[4] एव च ॥७५१॥
अक्षदेवी[5] स एव स्या-दक्षै र्दीव्यति यो जन ।

❀ द्यूतनामानि ❀

अक्षवती[1] पण[2] द्यूत[3], कैतव[4] स्याद् दुरोदरम्[5] ॥७५२॥

❀ अक्षनामानि ❀

पाशक.[1] प्रासको[2] ऽक्ष[3] स्याद्, द्यूतस्थान हि देवन[4] ।

* अक्षपणनामानि *

अक्षपणो[1] ग्लहो[2] ग्लहिः[3], द्यूताय कल्पितं धनम् ॥७५३॥

* शारिफलनामानि *

स्यात् शालिफलक[1] शालि-फल[2] मष्टापद[3] स्तथा ।

* शारनामानि *

शारि[1] श्च खेलनी[2] शार [3], कथ्यन्ते शारसंज्ञकाः ॥७५४॥

परिणायो[1] ऽपि शारीणां, नयन स्यात् समन्ततः ।

* प्राणिद्यूतनाम *

प्राणियुद्ध क्रिया क्रीडा, प्राणिद्यूतं[1] समाह्वयः[2] ॥७५५॥

* व्यालग्राहिनामानि *

अहितुण्डिक[1] नामास्ति, व्यालग्राही[2] तथैव च ।

आहितुण्डिक[3] नामापि, स एव कथ्यते किल ॥७५६॥

* मनोजवनामानि *

मनोजवस[1] आख्यात , ताततुल्यो[2] मनोजव [3] ।

* देशकनाम *

शासनं कुरुते यो हि, स शास्ता[1] देशक[2] स्तथा ॥७५७॥

## ❀ धन्यनामानि ❀

पुण्यवान्[1] सुकृती[2] धन्यः[3], पुण्यात्मा जन उच्यते ।

## ❀ मित्रवत्सलनामानि ❀

मित्रे स्नेहस्य कर्त्ता स्यात्, मित्रयु[1] र्मित्रवत्सलः[2] ॥७५८॥

## ❀ क्षेमङ्करनामानि ❀

शिवताति[1] स्तथा रिष्ट-ताति[2] श्चापि शिवङ्करः[3] ।
क्षेमङ्कर[3] स्तथैवास्ति, कल्याणकारक स च ॥७५६॥

## ❀ आस्तिकनामानि ❀

आस्तिकः[1] श्राद्ध[2] श्रद्धालु[3], श्रद्धावानाऽऽगमे सदा ।

## ❀ नास्तिकनाम ❀

शास्त्रे श्रद्धा न यस्यास्ति, स भवेत् नास्तिको[1] जनः ॥७६०॥

## ❀ वैरङ्गिकनाम ❀

वैरङ्गिको[1] विरागार्हो[2], वैराग्यलायकं स च ।

## ❀ वीतदम्भनाम ❀

अमायावी जनः प्रोक्तो, वीतदम्भो[1] ऽप्यकल्कन ७ ॥७६१॥

## ❀ असम्मतनाम ❀

प्रणाय्यो[1] ऽसम्मतो[2] लोके, विरुद्धपथगन्तुक ।

❀ अनुपदिनाम ❀

अनुपदी[1] तथा ऽन्वेष्टा[2], पश्चाद् गन्तरि मानवे ॥७६२॥

❀ समर्थनामानि ❀

सह [1] क्षम [2] समर्थ[3] श्च, प्रभविष्णु[4] स्तथैव च ।
अलम्भूष्णु [5] प्रभूष्णु[6] श्च, शक्त[7] श्चेति समर्थका ॥७६३॥

❀ भूतात्तनाम ❀

आविष्ट[1] श्चापि भूतात्तो[2], भूतग्रस्तो हि कथ्यते ।

❀ शिथिलनाम ❀

शिथिल[1] श्च श्लथो[2] नाम, बन्धभेदो निगद्यते ॥७६४॥

❀ अङ्गमर्दनाम ❀

संवाहको[1] ऽङ्गमर्द [2] स्यात्, शरीर मर्दको जन ।

❀ नष्टबीजनाम ❀

निष्कलो[1] नष्टबीज: स्यात्, सत्त्वेन रहितो जन ॥७६५॥

❀ उपविष्टनाम ❀

उपविष्ट[1] स्तथाऽऽसीन [2], कथ्यते उपविष्टक ।
ऊर्ध्व[1] ऊर्ध्वन्दम[2] श्चैव, स्थित[3] श्चेत्यपि मन्यते ॥७६६॥

❀ पथिकनामानि ❀

प्रवासी[1] पथिकः[2] पान्थो[3], ऽध्वनीन[4] श्चा ऽध्वग[5] स्तथा ।
अध्वन्यो[6] देशिक[7] श्चैव, कथितो मार्ग गन्तरि ॥७६७॥

❀ पथिकसार्थनाम ❀

हारि[1] पथिकसार्थः[2] स्यात्, पथिकानां समूहके ।

❀ पाथेयनाम ❀

पाथेयं[1] शम्बल[2] श्चापि, पथि खाद्ये निगद्यते ॥७६८॥

❀ जङ्घालनाम ❀

अतिजव[1] श्च जङ्घालो[2], वेगवानुच्यते जनः ।

❀ जङ्घाकरनामानि ❀

जङ्घाकरिक[1]-जाङ्घिकौ[2], जङ्घाकर[3] श्च कथ्यते ॥७६९॥

❀ त्वरितनामानि ❀

जवी[1] च जवन[2] श्चापि, त्वरितो[3] बहुवेगवान् ।

❀ वेगनामानि ❀

जवो[1] वाज[2] स्तथा वेगो[3], रयो[4] रंह[5] स्तथा तरः[6] ॥७७०॥
प्रसर[7] श्च स्यद[8] श्चैव, वेगनामानि सन्ति वै ।

## ※ मन्थरनाम ※

मन्थरो[1] मन्दगामी[2] च, य शनै श्चलतीह सः ॥७७१॥

## ※ अनुकामीननाम ※

[1]कामगाम्यनुकामीनः[2], स्वेच्छाचारी जनो भवेत् ।

## ※ अत्यन्तीननाम ※

अत्यन्तीनो[1] ऽत्यन्तगामी[2], बहुगन्ता जन· स्मृतः ॥७७२॥

## ※ सेवकनामानि ※

अनुगो[1] नुचर[2] श्चैवा,-ऽनुप्लवो[3] ऽभिचर[4] स्तथा ।
सहाय[5] श्चानुगामी[6] चा,-ऽऽनुजीवी[7] स्याद् च सेवकः[8] ॥७७३॥

## ※ सेवानामानि ※

सेवा[1] भक्ति[2] श्च शुश्रूषा[3], परिचर्या[4] प्रसादना[5] ।
उपास्ति[6] रुपचार[7] श्च, परीष्टि.[8] स्यादुपासना[9] ॥७७४॥
पर्यैषणा[10] वरिवस्या[11], भवेदाराधना[12] च सा ।

## ※ पदातिकनामानि ※

पादचारी[1] पदाति[2] श्च, पादातिक[3] पदातिक.[4] ॥७७५॥
पदाजि[5] श्चापि पादाजि[6], पद्दिक[7] पदग[8] स्तथा ।
पत्ति[9] पद्ग[10] श्च पादात[11], पद्भ्या चलति स भवेत् ॥७७६॥

## ※ अग्रेसरनामानि ※

पुरोगमः[1] पुरोगामी[2], प्रष्ठो[3] ऽग्रत सर[4] स्तथा ।
अग्रसरः[5] पुरोग[6] श्च, ह्यग्रेगू[7] श्च पुर सरः ॥७७७॥

## ※ अतिथिनामानि ※

प्राघूर्णक[1] श्च प्राघूण[2], स्यादाऽऽतिथ्यो[3] ऽतिथि[4] स्तथा ।
आवेशिक[5] स्तथा ऽऽगन्तुः[6], अभ्यागतो[7] ऽपि कथ्यते ॥७७८॥

## ※ आतिथ्यनामानि ※

आतिथ्य[1] मातिथेयी[2] च, स्यादा ऽऽवेशिक[3] मित्यपि ।
सूर्यास्तात् परमायात, सूर्योढ[1] कथ्यते हि सः ॥७७९॥

## ※ पाद्यनाम ※

पाद्यं[1] भवति तल्लोके, पादप्रक्षालनाय यत् ।

## ※ अर्घ्यनाम

अर्घ्यं[1] पूजाकृते तोयं, दीयते तत्र कथ्यते ॥७८०॥

## ※ अभ्युत्थाननाम ※

सत्कारस्य क्रियोत्थाय, अभ्युत्थान[1] ञ्च गौरवम्[2] ।

## ※ व्यथकनामानि ※

अरुन्तुद[1] श्च मर्मस्पृक्[2], व्यथक[3] श्चापि कथ्यते ॥७८१॥

## ※ ग्रामेयकनामानि ※

ग्रामीणो[1] ग्रामवासी स्यात्, ग्राम्यो[2] ग्रामेयक[3] स्तथा ।

## ※ जननामानि ※

जन [1] प्रजा[2] च लोक[3] श्च, सर्वसाधारणो जनः ॥७८२॥

## ※ अमुष्यपुत्रनामानि ※

प्रख्यातस्य पितु: पुत्र:, स्यादाऽऽमुष्यायण[1] स्तथा ।
अमुष्यपुत्र [2] प्रख्यात,-वप्तृक[3] श्चापि कथ्यते ।७८३॥

## ※ कुलीननामानि ※

महाकुलः[1] कुलीन[2] श्च, कुल्य [3] कौलेयक[4] स्तथा ।
अभिजात[5] श्च जात्य[6] श्च, स्यादेवमभिजः[7] पुनः ॥७८४॥

## ※ कुलनामानि ※

गोत्रं[1] वंशो[2] ऽन्ववाय[3] श्च, सन्तानो[4] ऽभिजन.[5] कुलम्[6] ।
जनन[7] मन्वय[8] श्चापि, सन्तति[9] श्चापि कथ्यते ॥७८५॥

## ※ स्त्रीनामानि ※

स्त्री[1] नारी[2] वनिता[3] वामा[4], योषा[5] योषित्[6] च योषिता[7] ।
वधू[8] र्वशा[9] वर्णिनी[10] च, महेला[11] महिला[12] ऽबला[13] ॥७८६॥
सीमन्तिनी[14] च सामान्य, स्त्रीवाचकाः प्रदर्शिताः ।
अङ्गना[1] ललना[2] कान्ता[3], रामा[4] भीरु[5] नितम्बिनी[6] ॥७८७॥

रमणी[७] सुन्दरी[८] चैव, प्रमदा[९] स्त्रीविशेषकाः ।
अङ्गानि सुन्दराण्यस्याः, सा भवेत् सुन्दरी सदा ॥७८८॥

क्रीडावती च रामा स्यात् रमणी चापि कथ्यते ।
क्रीडन्ती ललना प्रोक्ता सुन्दराऽवयवाऽङ्गना ॥७८९॥

मनोज्ञा सर्वलोकानां, चित्ताकर्षणकारिका ।
वामाक्षी[१] च मृगाक्षी[२] च, मत्तेभगमना[३] पुन ॥७९०॥

तरललोचना[४] ख्याता, सुस्मिता[५] चाऽलसेक्षणा[६] ।
वरारोहा[७] ऽपि प्रख्याता, तथैव वरवर्णिनी[८] ॥७९१॥

प्रतीपदर्शिनी[९] क्वापि, काव्ये शास्त्रे निरूपिता ।
लीला[१] शृङ्गारचेष्टा स्यात् मान.[१] स्त्रीणां धनं स्मृतम् ॥७९२॥

स्मर[१] कामर्थक श्चापि मनोविलास इत्यपि ।
एतस्मादपि नामानि, स्त्रीणां भवन्ति कानिचित् ॥७९३॥

लीलावती[१] स्मरवती, मानिनी नाम जायते ।
मनोविलासवत्यादि,-नाम काव्ये समीरितम् ॥७९४॥

### * स्त्रीणां स्वाभाविकोऽलङ्कारः *

विलासो[१] ललितो[२] लोल[३] विभ्रमो[४] विहृतं[५] तथा ।
विव्वोक[६] श्चापि विव्बोको[७],
विच्छित्तिः[८] किलिकिञ्चितम्[९] ॥७९५॥
कुट्टमितं[१०] तथा मोट्टा-यितं[११] मोटायितं[१२] च हि ।
एवा सर्वाऽपि स्त्रीणां स्वा,-भाविकालङ्कृति र्भुवि ॥७९६॥

## ❀ स्त्रीणा सात्त्विकोऽलङ्कार ❀

शोभा[1] माधुर्य[2] मौदार्य[3], प्रागल्भ्यं[4] दीप्ति[5] रेव च ।
धीरत्वं[6] कान्ति[7] रप्यास्ति, स्त्रीणां सात्त्विकालङ्कृति: ॥७९७॥
हेला[1] हाव[2] श्च भावो[3] ऽपि, स्त्रीणामङ्गजाऽलङ्कृति ।

## ❀ भामिनीनाम ❀

कोपना[1] भामिनी[2] नारी, कोपवती हि कथ्यते ॥७९८॥

## ❀ वाणिनीनाम ❀

वाणिनी[1] वनिता प्राय: छेका मत्ता च मन्यते ।

## ❀ कन्यानामानि ❀

कनी[1] कन्या[2] कुमारी[3] स्यात्,
गौरी[1] तु नग्निका[2] ऽरजा[3] ॥७९९॥

## ❀ तरुणीनामानि ❀

तरुणी[1] तलुनी[2] स्याद्वै, युवति[3] युवती[4] चरी[5] ।
मध्यमा[6] दिक्करी[7] चैव, दृष्टरजा[8] पुन: किल ॥८००॥

## ❀ स्वयंवरानामानि ❀

स्वयंवरा[1] तथा वर्या[2], पतिंवरा[3] पि कथ्यते ।

### * वधूटीनामानि *

वधूटी[1] वध्वटी[2] चैव, चिरण्टी[3] च सुवासिनी[4] ॥८०१॥

चरण्टी[5] स्याच्चरिण्टी[6] च, चिरिण्टी[7] स्ववासिनी[8] ।

### * पत्नीनामानि *

पत्नी[1] पाणिगृहीती[2] च, परिग्रह.[3] सधर्मिणी[4] ॥८०२॥

सधर्मचारिणी[5] भार्या[6], द्वितीया[7] सहधर्मिणी[8] ।

ऊढा[9] क्षेत्रं[10] कलत्रं[11] च,

कराती[12] गृहिणी[13] जनी[14] ॥८०३॥

वधू[15] जाया[16] तथा[17] दारा:[18],

दारा[19] दार[20] श्च गेहिनी[21] ।

पुन· सहचरी[22] चेति, कथ्यते सहचारिणी ॥८०४॥

### * पुरन्ध्रीनाम *

पुरन्ध्री[1] स्याद् कुटुम्बिनी[2], सा कुटुम्बवती जनी ।

### * प्रजावतीनामानि *

भ्रातुर्जाया[1] तथा भ्रातृ,-जाया[2] स्याच्च प्रजावती[3] ॥८०५॥

### * पुत्रवधूनामानि *

सूनो: स्नुषा[1] वधूटी[2] च, जनी[3] वधू[4] श्च मन्यते ।

## * यातरनाम *

बन्धुवर्गस्य या जाया, यातर[1] स्ताः परस्परम् ॥८०६॥

## * वारपत्नीनाम *

वीरपत्नी[1] वीरभार्या[2], सा स्त्री वीरजनस्य वै ।

## * कुलस्त्रीनामानि *

स्यात् कुलबालिका[1] चैव, कुलस्त्री[2] कुलपालिका[3] ॥८०७॥

## * प्रेयसीनामानि *

प्रिया[1] प्राणसमा[2] प्रेष्ठा[3], प्राणेशा[4] प्रेयसी[5] तथा ।
दयिता[6] हृदयेशा[7] च, प्रणयिनी[8] च वल्लभा[9] ॥८०८॥

कान्ता[10] प्रेमवती[11] चेति, प्रोक्ता लोके प्रियप्रिया ।

## * पतिनामानि *

पतिः[1] प्राणसम.[2] प्रेयान्[3], प्राणेश[4] प्रणयी[5] प्रियः[6] ॥८०९॥

प्रेष्ठः[7] पाणिग्रही[8] कान्त[9], पाणिग्राह[10] श्च वल्लभ[11] ।
उपयान्ता[12] परिणेता[13],
भर्त्ता[14] भोक्ता[15] तथा धवः[16] ॥८१०॥

वरयिता[17] विवोढा[18] च, रुच्य[19] श्च रमणो[20] वर.[21] ।
दायतो[22] हृदयेश[23] श्च, सेक्ता चेति प्रिय पति ॥८११॥

## ❀ जन्यानाम ❀

जन्याः[१] वरस्य मित्राणि, व्यवहारे सदा स्मृता ।

## ❀ विवाहनामानि ❀

उद्वाह[१] उपयाम[२] श्च, विवाह[३] पाणिपीडनम्[४] ।।८१२।।

स्यात् पाणिग्रहण[५] दारा,-कर्म[६] परिणय[७] स्तथा ।
उपयमो[८] ऽपि नामास्ति, जाम्बूलमालिका[९] पुनः ।।८१३।।

## ❀ वरयात्रानाम ❀

दौन्दुभी[१] वरयात्रा[२] स्यात् सा प्रसिद्धा महीतले ।

## ❀ वर्णकनाम ❀

गोपाली[१] वर्णकं[२] चेति, देहे विलेपने कृते ।।८१४।।

## ❀ वरनिमन्त्रणनाम ❀

वरनिमन्त्रणं[१] शान्ति,-यात्रा[२] चेत्यपि मन्यते ।

## ❀ वरमहोत्सवनाम ❀

स्यादिन्द्राणीमहो[१] हेलि[२], ख्यातं वरमहोत्सवम् ।।८१५।।

## ❀ मङ्गलध्वनिनाम ❀

उलूलु.[१] मङ्गलध्वनि.[२], चेति मङ्गलशब्दक· ।

❀ पूर्णकलशनामानि ❀

स्याद् वै स्वस्त्ययन[1] पूर्ण-कलश[2] मङ्गलाह्निकम्[3] ॥८१६॥

❀ मङ्गलस्नाननाम ❀

शान्तिकं[1] मङ्गलस्नान[2], यत् सुजलेन क्रियते ।

❀ हस्तलेपनाम ❀

करण[1] हस्तलेप[2] श्च, विवाह समये विधौ ॥८१७॥

❀ हस्तबन्धनाम ❀

पीडनं[1] हस्तबन्ध[2] श्च, पाणिग्रहण नामनी ।

❀ करमोचननाम ❀

तथापि समवभ्रंश[1], कथ्यते करमोचनम् ॥८१८॥

वार्त्तिक[1] धूलिभक्त[2] स्याद्, विवाह समये क्रिया ।

❀ जामातृनाम ❀

जामाता[1] जगति ख्यात[2], पुत्रीपतिः स मन्यते ॥८१९॥

❀ जारनाम ❀

उपपति[1] श्च जारो[2] ऽपि, कथ्यते जारपुरुष ।

❀ गणिकापतिनाम ❀

स्याद् गणिकापति[1] र्नाम, भुजङ्गो[2] ऽपि तथैव च ॥८२०॥

* दम्पतीनामानि *

दम्पती[1] जम्पती[2] जाया,-पती[3] भार्यापती[4] तथा ।
वरवध्वो स्तु नामानि, पतिपत्न्योः तथैव च ।।८२१।।

* दायनामानि *

सुदायो[1] युतयोर्देयं, यौतकं[2] हरणं[3] तथा ।
दाय[4] श्चेत्यपि नामापि, कथ्यते स्त्रीहिते धने ।।८२२।।

* महिषीनाम *

अभिषेकवती राज्ञी, महिषी[1] कथ्यते बुधैः ।
अन्या नृप स्त्रियः प्रायो, भोगिन्यो[1] विदिता किल ।।८२३।।

* सैरन्ध्रीनाम *

स्वतन्त्रा चा ऽन्यवेश्मस्था, पुनश्च शिल्पजीविनी ।
सैरन्ध्री[1] या प्रसिद्धा सा, कथ्यते कोविदैः किल ।।८२४।।

* असिक्नीनाम *

नृपस्या ऽन्त पुरप्रेष्या, साऽसिक्नी[1] कथ्यते जनैः ।

* दूतीनाम *

दूती[1] सञ्चारिका[2] चेति, दूत्यर्थे वर्त्तते ऽत्र हि ।।८२५।।

❀ प्राज्ञीनामानि ❀

तीक्ष्णबुद्धिमती नारी, प्रज्ञा[1] प्राज्ञी[2] प्रजानती ।

❀ प्राज्ञानामानि ❀

प्रोक्ता प्राज्ञा[1] पुनश्चापि, सा स्त्री प्रज्ञयाऽन्विता ॥८२६॥

❀ आभीरीनाम ❀

आभीरी[1] स्यात् महाशूद्री[2], महिला ऽऽभीरजातिका ।

❀ आचार्यस्य स्त्रीनाम ❀

आचार्यानी[1] तथा ऽऽचार्यी[2], आचार्यस्य सधर्मिणी ॥८२७॥

❀ मातुलीनाम ❀

मातुली[1] मातुलानी[2] च, मातुल स्त्री निगद्यते ।

❀ उपाध्यायस्य स्त्रीनाम ❀

[1]उपाध्यायान्युपाध्यायी[2], उपाध्यायस्य हि जनी ॥८२८॥

❀ क्षत्रियस्य स्त्रीनाम ❀

क्षत्रियस्य च पत्नी वै, क्षत्रियी[1] कथ्यते बुधैः ।

❀ अर्यी शूद्रीनाम ❀

अर्यी[1] वैश्यस्य भार्याऽऽर्यी[2], शूद्री[1] शूद्रस्य गेहिनी ॥८२९॥

❋ आचार्यानाम ❋

आचार्या[1] स्त्री प्रसिद्धास्ति, व्याख्यात्री यत्र कुत्र वै ।

❋ शूद्रानाम ❋

शुद्रजात्युद्भवा नारी, सा शूद्रा[1] कथ्यते जनैः ॥८३०॥

❋ क्षत्रियाणीनाम ❋

क्षत्रिया[1] क्षत्रियाणी[2] च, क्षत्रियजातिजा स्मृता ।

❋ उपाध्यायीनाम ❋

उपाध्यायी[1] उपाध्याया[2], शिक्षिका स्त्री निगद्यते ॥८३१॥

❋ अर्याणीनामानि ❋

अर्या[1] ऽर्याणी[2] च सा नारी, मन्यते वैश्यजातिजा ।
आर्या[1] ऽऽर्याणी तथैवास्ति, साऽपि वैश्योद्भवा किल ॥८३२॥

❋ द्विरूढानामानि ❋

पुनर्भू[1] र्चाद्विरूढा[2] स्याद्, दिधीषू[3] र्दिधिषू[4] स्तथा ।

❋ दिधिषूनाम ❋

पुनर्लग्नकरिण्याऽस्तु, पति वै दिधिषू[1] र्भवेत् ॥८३३॥

स्यादग्रेदिधिषू[1] र्विप्र , पुनर्लग्न विधायकः ।

* परिवेत्तृनाम *

परिवेत्ता[1] च स स्यात, ज्येष्ठं त्यक्त्वा विवाहित ॥८३४॥

स्वय न परिणीतो य, कनिष्ठ श्च विवाहित ।

* परिवित्तिनाम *

स एव परिवित्ति[1] स्तु, कथ्यते व्यवहारत. ॥८३५॥

* परिवेदिनीनाम *

परिवेत्तु स्तु पत्नी वै, मन्यते परिवेदिनी[1] ।

* कामुकीनाम *

कामुकी[1] च वृषस्यन्ती[2], मैथुनेच्छावती भवेत् ॥८३६॥

* कामुकानाम *

धनादीच्छावती नारी, कथ्यते कामुका[1] हि सा ।

* अध्यूढानाम *

कृतसापत्निका[1] ऽध्यूढा[2], मन्यते प्रथमाऽङ्गना ॥८३७॥

अधिवित्ता[3] ऽधिविन्ना[2] च, सापि पत्नी तथैव हि ।

* सतीनामानि *

एकपत्नी[1] सती[2] साध्वी[3], सुचरित्रा[4] पतिव्रता[5] ॥८३८॥

## ❀ असतीनामानि ❀

अथाऽसती[1] चर्षणी[2] च, धर्षणी[3] स्वैरिणी[4] तथा ।
इत्वरी[5] पुंश्चली[6] चापि, त्रिलोचना[7] विलोचना[8] ॥८३९॥
अविनीता[9] पांसुला[10] खण्ड-शीला[11] मदननालिका[12] ।
बन्धुदा[13] बन्धकी[14] चैवं, कुलटा[15] कलकूणिका[1] ॥८४ ॥
दुश्शृङ्गी[17] च मनोहारी[18], लाञ्छनी[19]चेति गथ्यते ।

## ❀ अभिसारिकानाम ❀

या याति पतिपार्श्वे सा, कामेच्छयाऽभिसारिका[1] ॥८४१॥

## ❀ सखीनामानि ❀

आलिः[1] सखी[2] वयस्या[3] च, सध्रीची[4] चेति मन्यते ।

## ❀ अशिश्वीनाम ❀

अशिश्वी[1] वनिता या सा, पुत्रशून्या हि कथ्यते ॥८४२॥

## ❀ सधवानामानि ❀

जीवत्पति[1] स्तथा जीवत्-पत्नी[2] पतिवत्नी[3] तथा ।

## ❀ विधवानाम ❀

विधवा[1] स्यादविश्वस्ता-लोके तु मृतस्वामिनी ॥८४३॥

निर्वीरा[1] ऽपि वनिता वै, सा निष्पतिसुता मता ।

❀ जीवत्तोकानाम ❀

जीवत्सन्तान नारी स्यात्, जीवत्तोका[1] च जीवसू[2] ॥८४४॥

❀ निन्दुनाम ❀

नश्यत् प्रसूतिका नारी, निन्दु[1] सा किल कथ्यते ।

❀ नरमालिनीनामानि ❀

सश्मश्रु[1] श्चापि पालि[2] श्च, तथैव नरमालिनी[3] ॥८४५॥

खलु भवति सा नारी, यस्याः श्मश्रु श्च विद्यते ।

❀ कात्यायनीनाम ❀

कात्यायनी[1] सा ऽर्द्धवृद्धा, कषायवस्त्रधारिणी ॥८४६॥

❀ विधवानामानि ❀

अधवा[1] विधवा[2] रण्डा[3], कथ्यते मृतस्वामिनी ।

❀ भिक्षुणीनामानि ❀

श्रवणा[1] श्रमणा[2] मुण्डा[3], भिक्षुकी[4] भिक्षुणी[5] स्मृता ॥८४७॥

❀ पोटानाम ❀

पुल्लक्षणवती नारी, पोटा[1] भवति नामतः ।

## ❀ वेश्यानामानि ❀

वेश्या[1] क्षुद्रा[2] रूपाजीवा[3], कामलेखा[4] खगालिका[5] ॥८४८॥
गणिका[6] लज्जिका[7] चापि, पण्याङ्गना[8] पणाङ्गना[9] ।
भुजिष्या[10] साधारणस्त्री[11], वारवाणि[12] श्च ज्ञायताम् ॥८४९॥
वारवधू[1] वारमुख्या, सेवाकार्ये स्थिता हि या ।

## ❀ कुट्टनीनामानि ❀

शम्भली[1] कुट्टनी[2] चुन्दी[3], परस्त्री पुंनियोजिका ॥८५०॥

## ❀ दासीनामानि ❀

चेटी[1] दासी[2] कुम्भदासी[3], पोटा[4] वोटा[5] गणेरुका[6] ।
वडवा[7] पिचनामास्ति[8], कुट हारिकापि कथ्यते ॥८५१॥

## ❀ नग्नानामानि ❀

कोटवी[1] नग्निका[2] नग्ना[3], या वस्त्ररहिता भवेत् ।

## ❀ पलिक्नीनाम ❀

वृद्धा नारी पलिक्नी[1] स्याद्, यस्या केशाः सिता इह ॥८५२॥

## ❀ रजस्वलानामानि ❀

रजस्वला[1] ऋतुमती[2], पुष्पवती[3] च पुष्पिता[4] ।
अधि.[5] स्त्रीधर्मिणी[6] चाऽत्री.[7], उदक्या[8] मलिनी[9] तथा ॥८५३॥

आत्रेयी[10] चेति नामानि, रजस्वलाया भवन्तिवै ।

## ❀ निष्कलानाम ❀

निष्कला[1] पुष्पहीना[2] च यस्या रजोऽभवन् नहि ॥८५४॥

## ❀ राकानाम ❀

राका[1] रजस्वला कन्या, कथ्यते विबुधै रिह ।

## ❀ स्त्रीरजोनामानि ❀

आर्त्तवं[1] कुसुमं[2] पुष्पं[3], स्त्रीधर्म[4] श्च रज[5] स्तथा ॥८५५॥

रजः प्रवृत्तिकाला स्तु, ऋतु[1] शास्त्रे निगद्यते ।

## ❀ मैथुननामानि ❀

मैथुनं[1] मोहनं[2] चापि, सम्भोग[3] सुरत[4] रतम्[5] ॥८५६॥

सम्प्रयोगः[6] रहो[7] ग्राम्य-धर्म[8] संवेशनं[9] तथा ।

पशुधर्म[10] पशुक्रिया[11], कामकेलि[12] स्तथा रतिः[13] ॥८५७॥

निधुवन[14] व्यवाय[15] श्च, कथ्यते कोविदै किल ।

## ❀ मिथुननामानि ❀

स्त्रीपुंसौ[1] मिथुन[2] प्रोक्त, द्वन्द्व[3] तदेव कथ्यते ॥८५८॥

## ❀ गर्भवतीनामानि ❀

अन्तर्वत्नी[1] गुर्विणी[2] च गुर्वी[3] गर्भवती[4] तथा ।

[5]आपन्नसत्त्वोदरिणी[6], गुर्विण्या नाम ज्ञायताम् ॥८५९॥

❀ दोहदान्विताानाम ❀

गर्भकाले विभिन्नेच्छा, श्रद्धालु[1] दोहदान्विता[2] ।

❀ प्रसूतिकानामानि ❀

जातापत्या[1] विजाता[2] स्यात्, प्राजाता[3] च प्रसूतिका[4] ॥-६०॥

❀ गभनामानि ❀

गर्भ[1] श्च गरभो[2] भ्रूणो[3], भवेद् दोहदलक्षणम्[4] ।

❀ गर्भाशयनामानि ❀

उलबं[1] च जरायु[2] श्च, गर्भाशयोऽपि कथ्यते ॥८६१॥

❀ कललनाम ❀

उल्बं[1] कलल[2] मित्याहु:, शुक्रशोणित मिश्रणम् ।

❀ दोहदनामानि ❀

दोहदं[1] दौर्हृदं[2] प्रोक्तं, श्रद्धा[3] च लालसा[4] पुन. ॥८६२॥

❀ सूतिमासनामानि ❀

सूतिमा.[1] सूतिमास[2] श्च, वैजनन[3] श्च बुध्यताम् ।

❀ प्रसवनाम ❀

प्रसव[1] श्च विजननं[2], जन्म नाम द्वयं भवेत् ॥८६३॥

### ❀ पुत्रनामानि ❀

अङ्गजः[1] आत्मजः[2] सूनुः[3] नन्दनः[4] कुलधारकः[5] ।
उद्वहो[6] दारक[7] पुत्रो[8], द्वितीय[9] स्तनयः[10] सुतः[11] ॥८६४॥

दायाद[12] श्चेति नामापि, कथ्यते सूनु नामनि ।

### ❀ पुत्रीनामानि ❀

उद्वहा[1] नन्दना[2] सूनु[3], रङ्गजा[4] चात्मजा[5] सुता[6] ॥८६५॥

धीदा[7] समर्धुका[8] चापि, दारिका[9] दुहिता[10] तथा ।
देहसञ्चारिणी[11] पुत्री[12], तनया[13] चेति कथ्यते ॥८६६॥

### ❀ सन्ताननामानि ❀

सन्तानः[1] सन्तति[2] स्तोक[3], प्रसूति[4] स्तूक्[5] पञ्चमम् ।
अपत्य[6] च प्रजा[7] चापि, सप्त नामानि सन्ति वै ॥८६७॥

### ❀ भ्रातृव्यनाम ❀

भ्रातृव्यो[1] भ्रातृपुत्र स्तु, भ्रात्रीय[2] श्चापि मन्यते ।

### ❀ भागिनेयनामानि ❀

स्वस्रीयो[1] भागिनेयः[2] स्याज् जामेयः[3] कुतप[4] स्तथा ॥८६८॥

### ❀ पौत्रनामानि ❀

कथ्यते पुत्रपुत्र[1] श्च, नप्ता[2] पौत्र[3] स्तथा पुनः ।

## ❀ दौहित्रनाम ❀

दौहित्र[1] श्चापि नप्ता हि, मन्यते दुहितु सुत ॥८६९॥

## ❀ प्रपौत्रनाम ❀

प्रतिनप्ता[1] प्रपौत्रो[2] ऽपि, पौत्रपुत्र उदाहृत· ।

## ❀ परम्परनाम ❀

प्रपौत्रस्यात्मजो लोके, परम्पर[1] श्च कथ्यते ॥८७ ॥

## ❀ पैतृष्वसेयनाम ❀

पितृष्वसु. सुतो लोके, पैतृष्वसेय[1] उच्यते ।
पैतृष्वस्रीय[2] इत्यस्ति, द्वितीयं नाम तस्य वै ॥८७१॥

## ❀ मातृष्वसेयनाम ❀

मातृष्वसुः सुतो लोके, मातृष्वसेय[1] कथ्यते ।
मातृष्वसीय[2] इत्यस्ति, द्वितीयं नाम तस्य हि ॥८७२॥

## ❀ विमातृजनाम ❀

विमातुरात्मजो लोके, वैमात्रेयो[1] विमातृजः[2] ।

## ❀ द्विमातृजनाम ❀

द्वयो मात्रो. सुत स्तावद्, द्वैमातुरो[1] द्विमातृजः[2] ॥८७३॥

## ❀ सामातुरनाम ❀

सांमातुर[1] सतीपुत्र, भाद्रमातुर[2] उच्यते ।

## ❀ सौभागिनेयनाम ❀

सौभाग्यवत्याः पुत्र स्तु, सौभागिनेय[1] उच्यते ॥८७४॥

## ❀ कानीननाम ❀

कन्या सुत स्तु कानीनो[1], व्यासः कर्ण उदाहृत ।

## ❀ पौनर्भवनाम ❀

पुनर्लग्नवती पुत्रः, पौनर्भव[1] श्च कथ्यते ॥८७५॥

## ❀ पारस्त्रैणेयनाम ❀

परस्त्रीषु समुत्पन्न, पारस्त्रैणेय[1] उच्यते ।

## ❀ दासेयनाम ❀

दासीपुत्र स्तु दासेयो[1], दासेर[2] श्च निगद्यते ॥८७६॥

## ❀ नटीसुतनामानि ❀

नटीसुत[1] स्तु नाटेयो[2], नाटेर[3] उच्यते पुनः ।

## ❀ असतीसुतनामानि ❀

कौलटेरो[1] बान्धकिनेयः[2], कौलटेयो[3] ऽसतीसुतः[4] ॥८७७॥

बन्धुल[५] श्चेति नाम्नानि, कथ्यते कुलटासुत. ।

✻ कौलटिनेयनाम ✻

सती स्त्री भिक्षुकी पुत्रः, कौलटिनेय[१] उच्यते ॥८७८॥

✻ कौलटेयनाम ✻

असती भिक्षुकी सूनु, कौलटेय[१] उदाहृत ।

✻ क्षेत्रजनाम ✻

क्षेत्रजो[१] देवरादिज, लोके निन्दित उच्यते ॥८७९॥

✻ औरसनाम ✻

औरस[१] श्चप्युरस्यो[२] वै, स्वस्त्री जातः सुतो भवेत् ।

✻ गोलकनाम ✻

मृते भर्तरि यो जातः, स गोलक[१] उदाहृत ॥८८०॥

✻ कुण्डनाम ✻

पत्यौ जीवति अन्यस्माज्, जातः कुण्ड[१] सुतो भवेत् ।

✻ भ्रातृनामानि ✻

सहोदरः[१] सगर्भ[२] श्च, सोदर्य[३] सोदर[४] स्तथा ॥८८१॥

भ्राता[५] च सहज[६] श्चापि, समानोदर्य[७] इत्यपि ।

❀ ज्येष्ठनामानि ❀

अग्रज[१] श्चाऽग्रिम.[२] पित्र्य[३],

स्याज् ज्येष्ठ.[४] पूर्वज[५] स्तथा ॥८८२॥

❀ कनिष्ठनामानि ❀

अवरजो[१] ऽनुज[२] स्याद् वै, कनीयान्[३] कन्यस[४] स्तथा ।

कनिष्ठ[५] श्च यविष्ठ[६] श्च,

स्याद् यवीयान्[७] जघन्यज[८] ॥८८३॥

पितुः पत्न्या श्च मातु श्च, भ्राता लोके निगद्यते ।

पितृव्य[१] श्च तथा श्याल:[१], मातुल:[१] क्रमशो ऽत्र वै ॥८८४॥

❀ देवरनामानि ❀

पत्यु' कनीयान् भ्राता स्याद, देवा[१] च देवृ[२]-देवरौ[३] ।

❀ भगिनीनामानि ❀

स्वसा[१] च भगिनी[२] जामि[३], सहोदरा नाम जायते ॥८८५॥

ज्येष्ठा ऽत्र वीरभवन्तो[१], प्राय कुत्रापि कथ्यते ।

❀ नन्दिनीनामानि ❀

ननन्दा[१] च ननान्दा[२] च, नन्दिनी[३] पतिसोदरा ॥८८६॥

## ❀ कुलीनाम ❀

पत्न्याः ज्येष्ठा स्वसा लोके, ज्येष्ठश्वश्रूः[1] कुली[2] भवेत् ।

## ❀ श्यालिकानामानि ❀

पत्न्याः लघ्वी स्वसा लोके, श्यालिका[1] केलिकुञ्चिका[2] ॥८८७॥

यन्त्रणी[3] चापि हाली[4] वै, कथ्यते पण्डितैः किल ।

## ❀ क्रीडानामानि ❀

क्रीडा[1] केलिः[2] किलः[3] खेला[4],

लीला[5] तथा सुखोत्सव[6] ॥८८८॥

कूर्दनं[7] वर्करो[8] नर्म[9], विनोदो[10] देवनं[11] तथा ।

परिहास.[12] परीहास[13], स्तथा रागरसो[14] द्रव[15] ॥८८९॥

ललनं[16] चेति नामापि, मन्यते नर्म वाचके ।

## ❀ पितृनामानि ❀

वप्यो[1] वप्ता[2] तथा तातो[3], बीजी[4] वप्य[5] पिता[6] पुनः ॥८९०॥

जनयिता[7] जनित्र[8] श्च, रेतोधाः[9] जनको[10] भवेत् ।

पितुः पिता पितामहः[1], तत् पित। प्रपितामह[2] ॥८९१॥

मातामहो[1] मातृवप्ता, तद् वप्ता प्रमातामह[1] ।

❀ मातृनामानि ❀

माता[1] ऽम्बा[2] जननी[3] जानी[4], जनयित्री[5] प्रसू[6] स्तथा ॥८९२॥
सवित्री[7] च जनित्री[8] च, मातृ नामनि कथ्यते ।

❀ कृमिलानाम ❀

कृमिला[1] च बहुप्रसूः[2], या सूते बहुसन्ततिम् ॥८९३॥

❀ धातृनाम ❀

उपमाता[1] च धात्री[2] सा, याऽन्यान् प्रापयति पयः ।

❀ वीरमातृनाम ❀

वीरसूः[1] वीरमाता[2] सा, या सूते वीरमात्मजम् ॥८९४॥

❀ श्वश्रूनाम, श्वसुरनाम ❀

श्वश्रू[1] र्माता पतिपत्न्यो', श्वसुरस्तु[1] पिता तयोः ।
पितरः[1] स्यात् पितुर्वंश्या, मातु र्मातामहाः[1] कुले ॥८९५॥

❀ मातुःपितुश्चनामानि ❀

मातरपितरौ[1] माता-पितरौ[2] पितरौ[3] तथा ।

❀ श्वश्र्वा श्वसुरस्य च नाम ❀

प्रोक्तं माता पिता चापि, श्वश्रूश्वशुरौ[1] श्वसुरौ[2] ॥८९६॥

## ❋ पुत्रपुत्रीनाम ❋

तथा पुत्र श्च पुत्री च, पुत्रौ[1] प्रोक्तं महीतले ।

## ❋ भ्रातु भगिन्याश्चनाम ❋

भ्राता च भगिनी चापि, भ्रातरौ[1] कथ्येते खलु ॥८९७॥

## ❋ स्वजननामानि ❋

स्वः[1] स्वजनः[2] सगोत्र [3]श्च, ज्ञाति[4] र्बन्धु[5] श्च बान्धव[6] ।

## ❋ स्वकीयनामानि ❋

प्रोक्तः पुनः स्वकीय[1] श्च, स्व[2] आत्मीय[3] स्तथा निजः[4] ॥८९८॥

## ❋ सपिण्डानाम ❋

सनाभयः[1] सपिण्डाः स्युः, पितुः सप्तान्तर्गता जनाः ।

## ❋ नपुंसकनामानि ❋

क्लीबः[1] षण्ढ[2] स्तथा पण्ड[3], स्तृतीयाप्रकृतिः[4] किल ॥८९९॥

शण्ठः[5] शण्ढ[6] स्तथा पण्डु[7], प्रोक्तं नपुंसकं[8] पुनः ।

## ❋ गात्रनामानि ❋

इन्द्रियायतनं[1] मूर्त्तिः[2], मूर्तिमत्[3] च कलेवरम्[4] ॥९००॥

अङ्गं[5] गात्रं[6] तनुः[7] क्षेत्रं[8], तनूः[9] संहननं[10] सिनम्[11] ।

वपु[11] श्च पुद्गल:[13] पिण्ड [14],
काय·[15] प्रजनुक:[16] पुरम्[17] ॥६०१॥

व्याधिस्थान[18] तथा वेरं[19], चतुःशाख[20] षडङ्गकम्[21] ।
भूधनो[22] विग्रहो[23] वर्ष्म[24],
घनो[25] बन्ध[26] श्च सञ्चर.[27] ॥६०२॥

शरीर:[28] करणं[29] देह[30], श्चेति नामप्रयोगत कथ्यते ।

## ❀ मृतकनाम ❀

मृत शरीर नामानि, मृतक[1] कुणपं[2] शव [3] ॥६ ३॥

## ❀ कबन्धनाम ❀

शिरो विना च मृतक कबन्धो[1] रुण्ड[2] उच्यते ।

## ❀ वयोनामानि ❀

दशा.[1] प्राया:[2] वयांसीह[3], कथ्यन्ते काव्यशास्त्रयो: ॥६०४॥

## ❀ देहलक्षणनाम ❀

देहस्य लक्षणं प्रोक्तं, सामुद्रं[1] देहलक्षण[2] ।

## ❀ देहावयवनामानि ❀

एकदेशे प्रतीको[1] ऽङ्गा[2],-ऽवयवा[3] ऽपघना[4] अपि ॥६०५॥

गात्र[5] श्चापि विजानीयात्, शरीरावयवं पुन ।

## ❀ मस्तकनामानि ❀

मस्तकं[१] मस्तिकं[२] मुण्डं[३],
मूर्धा[४] मौलि[५] स्तथा शिरः[६] ॥९०६॥

उत्तमाङ्गं[७] तथा शीर्षं[८], वराङ्गं[९] चापिकं[१०] पुनः ।
कथ्यते करणत्राणं[११], देश नामानि सन्ति वै ॥९०७॥

## ❀ केशनामानि ❀

शिरसिजाः कचाः[१] केशाः[२], तोथवाका[३] श्च कुन्तला[४] ।
वाला[५] श्च वेल्लिताग्रो[६] ऽस्रः[७], चिकुरा[८] श्चिहुरा[९] स्तथा ॥९०८॥

वृजिन[१०] श्चेति नामापि, कथ्यते केशवाचके ।

## ❀ केशपाशनामानि ❀

सकेश. पाश[१]-रचना[२]-भार[३]-उच्चय[४] उच्यताम् ॥९०९॥

हस्त[५] पक्षः[६] कलाप[७] श्च, केशपाशादिकं भवेत् ।

## ❀ कुटिलकेशनामानि ❀

अलक[१] कर्कराल[२] श्च, खङ्कर[३] श्चूर्णकुन्तल.[४] ॥९१०॥

कुटिलकेश[५] इत्यस्ति, केशशोभा करक्रिया ।

## ❀ भ्रमरकनामानि ❀

भ्रमरकः[१] कुरल[२] श्च, ललाटे भ्रमरालकः[३] ॥९११॥

❀ जूटकनामानि ❀

धम्मिल्लो[1] ऽपि केशवेशो मौलि[2] जूटक[3] इत्यपि ।

❀ केशवेषनामानि ❀

कबरी[1] बर्बरी[2] नाम, केशवेष[3] श्च पर्परी[4] ॥९१२॥

❀ वेणीनामानि ❀

वेणी[1] वेणि:[2] प्रवेणि[3] श्च प्रवेणी[4] ग्रन्थितालक: ।

❀ शिरस्यनामानि ❀

शीर्षण्य[1] श्च शिरस्य[2] श्च, प्रलोभ्यो निर्मलोऽलक: ॥९१३॥

❀ सीमन्तनाम ❀

केशेषु वर्त्म सीमन्त, कथ्यते शिरसि स्थित ।

❀ पलितनाम ❀

पलितं[1] पाण्डुर' केश, वृद्धवयसि दृश्यते ॥९१४॥

❀ शिखानामानि ❀

चूडा[1] शिखण्डिका[2] केशी[3], केशपाशी[4] तथा शिखा[5] ।

❀ काकपक्षनामानि ❀

सा बालानां शिखाण्डक:[1], काकपक्ष[2] शिखण्डक[3] ॥९१५॥

## ❀ मुखनामानि ❀

आस्यं[1] मुख[2] वर[3] वक्त्रं[4], घनं[5] घनोत्तम[6] चरम्[7] ।
आननं[8] वदनं[9] तुण्डं[10], तेरं[11] दन्तालय[12] स्तथा ॥९१६॥

लपनं[13] चेति नामानि, मुखस्य सुधयो विदु ।

## ❀ ललाटनामानि ❀

भालं[1] गोधि[2] रलीक[3] श्च, ललाट[4] मलिकं[5] भवेत् ॥९१७॥

## ❀ कर्णनामानि ❀

कर्ण[1] श्रोत्र[2] महानाद[3], श्रवणं[4] च श्रुतिः[5] श्रवः[6] ।
शब्द[7]-ध्वनिग्रहौ[8] चैव, शब्दाधिष्ठान[9] मित्यपि ॥९१८॥

पैञ्जूष[10] श्चेति नामानि, कर्णस्य प्रतिभान्ति हि ।
वेष्टलं[1] कर्णशष्कुली[2], कथ्यते कर्णपर्पटी ॥९१९॥

पालि[1] श्च कर्णलतिका[2], कर्णाग्रभाग उच्यते ।
धारा[1] च कर्णप्रान्तो[2] हि, कर्णान्त भाग उच्यते ॥९२०॥

कर्णमूलस्य भाग स्तु, कर्णमूलं[1] च शीलकम्[2] ।
कपाल-कर्णयो र्मध्यभाग. शङ्खः[1] स्मृतो बुधैः ॥९२१॥

## ❀ नेत्रनामानि ❀

नेत्रं[1] च नयनं[2] चक्षु[3] र्लोचनं[4] च विलोचनम्[5] ।
ईक्षणं[6] दर्शनं[7] दृष्टि,-र्देवदीपो[9] ऽक्षि[10] वै पुन ॥९२२॥

रूपग्रहो[11] ऽम्बकं[12] चैव, दृक्[13], चेति कथ्यते बुधैः ।
तारा[1] कनीनिका[2] भूयस्-तारका[3] रूप ग्राहिणी ॥६२३॥

सौम्य[1] वामाक्षि नामास्ति, भानवीय[1]ञ्च दक्षिणम् ।
अनक्षि[1] दोषवन् नेत्र, ख्यातं लोके सदा बुधैः ॥६२४॥

## ❋ दर्शननामानि ❋

निभालनं[1] च निध्यानं[2], दर्शन[3] मवलोकनम्[4] ।
ईक्षण[5] द्योतन[6] चापि, निशमनं[7] निशामनम्[8] ॥६२५॥

तथा निर्वर्णनं[9] चेति, नामानि दर्शनस्य हि ।

## ❋ कटाक्षनामानि ❋

अक्षिविकूणितं[1] काक्षः[2], कटाक्ष[3] श्चार्धवीक्षणम्[4] ॥६२६॥

अपाङ्गदर्शनं[5] चेति, वक्रदृष्टया निदर्शनम् ।
स्यादुन्मीलन[1] मुन्मेषो[2], नयनोद्घाटनं स हि ॥६२७॥

नयनमीलनं प्रोक्तं, निमेष[1] श्च निमीलनम् ।
अक्ष्णो र्बाह्यान्तावपाङ्गौ[1], भ्रू[1]-रूर्द्ध्वे रोमपद्धति ॥६२८॥

भ्रकुटिः[1] भ्रुकुटि[2] श्चैवं, भ्रूकुटि[3] भृकुटि स्तथा ।
सकोपभ्रूविकारे हि कथ्यते कोविदैः किल ॥६२९॥

भ्रुवो र्मध्ये हि विज्ञेय, कूर्चं कूर्पं[2] च नामनि ।
नेत्ररोमणि वै पक्ष्म[1], मन्यते पण्डितैः पुनः ॥६३०॥

## ❀ नासिकानामानि ❀

नासिका[1] च नसा[2] नासा[3], नस्या[4] च गन्धनालिका[5] ।
नक्र[6] नर्कुटकं[7] घ्राण[8], घोणा[9] गन्धवहा[10] तथा ॥६३१॥

गन्धज्ञा[11] गन्धहृत्[12] चैव, शिङ्घिनी[13] च विकूणिका[14] ।
नासिक्यं[15] चेति नामानि, नासिकाया भवन्ति वै ॥६३२॥

## ❀ ओष्ठनामानि ❀

ओष्ठो[1] ऽधरो[2] रसालेपी[3], रदच्छद[4] श्च वाग्दलम् ।
दन्तवस्त्रं[6] च नामाऽपि, दशनोच्छिष्ट[7] उच्यते ॥६३३॥

ओष्ठप्रान्तौ सृक्कणी[1] स्यात्, सृक्कि[2] च सृक्किणी[3] तथा ।
चिवुक[4] मसिका[5] स्तु, चिक्क[1] चिक्कमधोऽसिकम् ॥६३४॥

## ❀ गल्लनाम ❀

सृक्कणः परभाग स्तु, गल्ल[1] स्यात् सदैव हि ।

## ❀ कपोलनाम ❀

गल्लात् परः कपोलो[1] ऽस्ति, गण्ड[1] पर कपोलत ॥६३५॥

गल्लो गण्डो कपोल श्च, समानार्थक एव च ।

## ❀ हनुनाम ❀

कपोलाधो हनु[1] र्वाच्यो, मुखाधोऽपि हनु र्भवेत् ॥६३६॥

### ❀ श्मश्रुनामानि ❀

आसुरी[1] चास्यलोमं[2] च, श्मश्रु[3] कूर्च[4] ञ्च व्यञ्जनम्[5] ।
कोटं[6] स्याद् दंष्ट्रिका[1] नाम, द्राढिका[2] दाढिका[3] तथा ॥६३७॥

### ❀ दाढानामानि ❀

दाढा[1] दंष्ट्रा[2] च जम्भ[3] श्च, दन्तभेदे त्रय भवेत् ।

### ❀ दन्तनामानि ❀

दन्ता[1] दंशा[2] द्विजा[3] दालु[4], दशना[5] रदना[6] रदा[7] ॥६३८॥
मल्लका[8] खादना[9] भूयः, खरु[10]र्मुखखुर[11] स्तथा ।
राजदन्तौ[1] तु मध्यस्थावुपरि श्रेणिकौ क्वचित् ॥६३९॥

### ❀ जिह्वानामानि ❀

जिह्वा[1] लोला[2] रसज्ञा[3] च, रशना[4] रसना[5] रसा[6] ।
काकु[7] श्च ललना[8] रस्ना[9], रसिका[10] रसमातृका[11] ॥६४०॥

### ❀ तालुनामानि ❀

काकुदं तालु[2] प्रख्यात, क्वचिद् वक्रदलं[3] तथा ।

### ❀ लम्बिकानामानि ❀

सुधास्रवा[1] घण्टिका[2] च, लम्बिका[3] गलशुण्डिका[4] ॥६४१॥

## * ग्रीवानामानि *

धमनि[1] कन्धरा[2] ग्रीवा[3], शिरोधि[4] श्च शिरोधरा[5] ।
रेखा त्रयवती सैव, कम्बुग्रीवा निगद्यते ॥६४२॥

## * शिर:पीठनामानि *

पुंस्त्रियो खटु [1] ख्यात, घाटा[2] श्चैव कृकाटिका[3] ।
तदर्थे च शिर: पीठं[4]-पण्डितै समुदाहृतम् ॥६४३॥

कृक:[1] स्यात् कन्धरामध्य[2], कृक पार्श्वौ तु वीतनौ[1] ।
ग्रीवाधमन्यौ प्राग् नीले[1], पश्चान् मन्ये[1] कलम्बिके[2] ॥६४४॥

## * कण्ठनामानि *

गलो[1] निगरण[2] श्चैव, कण्ठ [3] कण्ठस्य कथ्यते ।

## * कण्ठमणिनाम *

मन्ये कण्ठमणिर्नाम,-काकलक[1] श्च काकल:[2] ॥६४५॥

## * स्कन्धनामानि *

स्कन्धो[1] भुजशिर[2] श्चासो[3], भुजशिखर[4] मुच्यते ।

## * जत्रुनाम *

सन्धिकरों ऽसग: जत्रु [1], उच्यते जगती जनै ॥६४६॥

## * बाहुनामानि *

बाहु[1] वाहा[2] भुजो[3] दो[4] श्च, प्रवेष्ट:[5] कथ्यते पुन. ।

## ❀ कक्षनामानि ❀

दोर्मूल[1] खण्डक[2] श्चैव, कक्षा[3] च भुजकोटर.[4] ॥६४७॥
स्यादेतयो रध पार्श्वं[1], कथ्यते पण्डितै जनै· ।

## ❀ कुर्परनामानि ❀

कफोणि[1] कुपर[2] श्चैव, कफाणि[3] कफणि[4] स्तथा ॥६४८॥
भुजामध्यं[5] च बाहूय-बाहुमन्धि[6] श्च कूर्पर[7] ।
कपोणि:[8] रत्निपृष्ठकं[9], चेति नामानि मन्यते ॥६४९॥
अधस्तस्याऽऽमणिबन्धा,-दुपबाहु[1] कलाचिका[2] ।
प्रकोष्ठ.[3] स्यात् प्रगण्ड[1] स्तु, कूर्परांसान्त उच्यते ॥६५०॥

## ❀ हस्तनामानि ❀

करो[1] हस्तः[2] शम[3] पाणिः[4], पञ्चशाखः[5] शय[6] सलः[7] ।
भुजदल[8] श्च नामानि, करस्य मन्यते बुध· ॥६५१॥
करस्यादौ मणिबन्धो[1], मणि[2] श्च कथ्यते पुन ।
हस्तस्य मणिबन्धादा-कनिष्ठ करभो[1] भवेत् ॥६५२॥

## ❀ अङ्गुलिनामानि ❀

अङ्गुली[1] स्यादङ्गुलि[2] श्च, करशाखा[3] ऽपि कथ्यते ।
अङ्गुरि[4] रङ्गुरी[5] शास्त्रे, ह्रस्वान्तोऽपि निगद्यते ॥६५३॥
अङ्गुष्ठो[1] ऽङ्गुल[2] इत्यस्ति, तर्जनी[1] च प्रदेशिनी[2] ।

मध्या[1] च मध्यमा[2] ज्येष्ठा[3], सावित्री[1] स्यादनामिका[2] ॥६५४॥

कनोनिका[1] कनिष्ठा[2] च, व्यवहारे प्रयुज्यते ।
अवहस्त [1] प्रसिद्धोऽपि, कथ्यते हस्तपृष्ठत. ॥६५५॥

## ❀ नखनामानि ❀

कामाङ्कुशो[1] भुजाकण्ट [2], करजः[3] पाणिज[4] स्तथा ।
कररुहः[5] करशूक.[6], पुनर्भवः[7] पुनर्नव.[8] ॥६५६॥

महाराजो[9] नख[10] श्चैव, नखर[11] श्चापि कथ्यते ।
प्रदेशिन्यादिभि सार्द्ध-मङ्गुष्ठे वितते सति ॥६५७॥

प्रादेश[1] श्चापि ताल[2] श्च, गोकर्ण[3] स्तदनन्तरम् ।
वितस्ति [4] कथ्यते भूयो, जगति पण्डितै जनैः ॥६५८॥

प्रसारिताङ्गुलौ पाणौ प्रहस्त [1] प्रतल[2] स्तल[3] ।
चपेट[4] स्तालिका[5] ताल,-श्चेति हस्तस्य पञ्चकः ॥६५९॥

कथ्यते तौ युतौ सिह-तल[1] संहतल[2] स्तथा ।

## ❀ मुष्टिनामानि ❀

संपिण्डिताङ्गुलि पाणि, र्मुचुटो[1] मुचुटि [2] पुन. ॥६६०॥

मुष्टि[3] र्मुस्तु[4] श्च सङ्ग्राहो[5], ऽर्द्धमुष्टिः खटक[1] स्तु वै ।
प्रसृत.[1] प्रसृतिः[2] पाणिः, कुब्जित. कथ्यते किल ॥६६१॥

पुन श्च प्रसृतौ हस्तौ, साप्यञ्जलि[1] हि मन्यते ।
प्रसृते च द्रवाधारे, गण्डूष[1] श्चुलुक[2] स्तथा ॥९६२॥

चलु[3] श्च चलुक[4] श्चेति, कथ्यते कोविदैः सदा ।
हस्त [1] प्रामाणिको मध्ये, मध्यमाङ्गुलिकूर्परम् ॥९६३॥

बद्धमूले भवेद् रत्नि[1]-ररत्नि[1] निष्कनिष्ठिकः ।
तिर्यग्बाहू प्रसारितौ, न्यग्रोध[1] श्च तनूतल [2] ॥९६४॥

बाहुचापो[3] वियाम[4] श्च, व्यायामो[5] व्यामक.[6] पुन ।
ऊर्ध्वीकृत भुजाहस्त-नरमान तु पौरुषम्[1] ॥९६५॥

## ❀ जानुमात्रनामानि ❀

जानुमात्र[1] जानुदघ्न[2], जानुद्वयस[3] मित्यपि ।
पुरुषमात्र[1] नृदघ्न[2], पुरुषद्वयस[3] पुन ॥९६६॥

प्रमाणार्थे खलु मात्रं, द्वयस दघ्न ऊह्यताम् ।

## ❀ पृष्ठवंशनाम ❀

रीढक [1] पृष्ठवंश[2] श्च, स्यात् पृष्ठ[1] चरम तनो ॥९६७॥

## ❀ उत्सङ्गनामानि ❀

अङ्क [1] क्रोड[2] उपस्थ[3] श्च, पुन रुत्सङ्ग[4] इत्यपि ।
देहस्य पूर्वभागो हि, कथ्यते पण्डितै किल ॥९६८॥

### ❋ वक्षनामानि ❋

उर[१] श्च हृदयस्थान[२], क्रोडा[३] क्रोडं[४] भुजान्तरे[५] ।
वत्सो[६] वत्स[७] तथा वक्ष[८], श्चेति जगति मन्यते ॥९६९॥

### ❋ हृदयनामानि ❋

गुणाधिष्ठानकं[१] हृद्[२] च, हृदयं[३] च स्तनान्तरम्[४] ।
असह[५] च त्रसं[६] मर्म-चरं[७] मर्मवरं[८] तथा ॥९७०॥

### ❋ कुचनामानि ❋

स्तनौ[१] कुचौ[२] च वक्षोजौ[३], धरणौ[४] च पयोधरौ[५] ।
उरसिजौ[६] तथोरोजौ[७], जानीयान्नाम सप्तकम् ॥९७१॥

### ❋ स्तनमुखनामानि ❋

स्तनाग्रं[१] स्तनवृन्त[२] श्च, स्तनमुख[३] ञ्च मेचक[४] ।
स्तनशिखा[५] च पिप्पल[६], चूचुक[७] चेति मन्यते ॥९७२॥

### ❋ उदरनामानि ❋

पिचण्डो[१] मलुक.[२] कुक्षिः[३], गर्भ[६] श्च जठरो[५]-दरे[६] ।
तुन्द[७] रोमलताधार[८], तुन्दि[९] श्च कथ्यते बुधैः ॥९७३॥

### ❋ यकृन्नामानि ❋

कालखण्डं[१] च कालेयं[२], कालखञ्ज[३] च कालक[४] ।

यकृत्[४] चेत्यादि नामानि, मन्यते यकृतो बुधः ॥६७४॥

### ❀ क्लोमनामानि ❀

दक्षिणे क्लुपुषं[१] क्लोमं[२], ताड्यं[३] च तिलकं[४] तथा ।
कथ्यते क्लोम वामे तु, पुष्पसो[१] रक्तफेनज[२] ॥६७५॥

### ❀ प्लीहानाम ❀

प्लीहा[१] गुल्मो[२]ऽपि वामे हि, मासपिण्डो निगद्यते ।

### ❀ अन्त्रनाम ❀

कुक्षावन्त्रं[१] पुरीत[२]-च्च, कथ्यतेऽपि पुरीतति[३] ॥६७६॥

### ❀ रोमलतानाम ❀

रोमावली[१] रोमलता[२], नाभौ रोमोद्गम स्मृत ।

### ❀ नाभिनामानि ❀

नाभि[१] श्च तुन्दकूपिका[२], सिरामूल[३] पुतारिका[४] ॥६७७॥

### ❀ मूत्राशयनामानि ❀

नाभेरधो मूत्राशय[१], वस्ति[३] मूत्रपुट[४] भवेत् ।

### ❀ अवलग्ननामानि ❀

अवलग्नं[१] विलग्नं[२] च, मध्य[३] श्च मध्यम[४] स्मृतः ॥६७८॥

## ❀ कटिनामानि ❀

कटिः[१] कट[२] कटीर[३] ञ्च, कलत्र[४] ञ्च ककद्मती[५] ।
श्रोणि[६] काञ्चीपदं[७] चेति, नामानि प्रथितानि वैः ॥९७९॥

## ❀ नितम्बनाम ❀

आरोह[१] श्च नितम्बो[२] ऽपि, स्त्रीकट्या पश्च भाग्भवेत् ।

## ❀ जघननाम ❀

जघनं[१] मन्यते विश्वे, स्त्रीकट्या अग्रतः पुन ॥९८०॥

त्रिकं[१] वंशाध स्तत् पार्श्व-कूपकौ तु कुकुन्दरे[१] ।
कुकुन्दुर.[२] कटीकूपौ[३], उञ्झिलिङ्गौ[४] रतावुके[५] ॥९८१॥

## ❀ पुतनामानि ❀

स्फिजौ[१] स्फिचौ[२] कटिप्रोथौ[३], पुतौ[४] चेति हि कथ्यते ।

## ❀ योनिनामानि ❀

भगो[१] ऽपत्यपथो[२] योनिः[३], वराङ्ग[४] स्मरमन्दिरम्[५] ॥९८२॥

स्त्रीचिह्न[६] च च्युति[७] श्चापि बुलि[८] श्च स्मरकूपिका[९] ।
एतानि मन्यते योने, र्नामानि पण्डितो जन ॥९८३॥

## ❀ लिङ्गनामानि ❀

पुंश्चिह्नं मेहनं[२] मेढ्र.[३], शिश्न[४] च शेप[५]-शेपसी[६] ।

लाङ्गूलं[7] लङ्गुल[8] लिङ्ग[9],
नाङ्गूल[10] च शेफ[11]-शेफसी ॥९८४॥

कामलता च लिङ्गस्य, नामानि कथितानि वै ।

❀ योनि-लिङ्गनामानि ❀

गुह्यं[1] प्रजननो[2]-पस्थां[3], कथ्यते द्वयमप्यद ॥९८५॥

❀ गुह्यमध्यनामानि ❀

गुह्यस्य मध्यभागोऽपि, गुह्यमध्यं[1] गुलो[2] मणि[3] ।

❀ सीवनीनाम ❀

कथ्यते तदर्धः सूत्र, सीवनी[1] साक्षरैः सदा ॥९८६॥

❀ अण्डनामानि ❀

अण्ड[1]-माण्डो[2] ऽण्डकोश[3] श्च,
मुष्क[4]-श्च वृषणो[5] ऽण्डक[6] ।
पेल[7] श्च पेलक[8] श्चेति, अण्डनामानि कथ्यते ॥९८७॥

❀ गुदनामानि ❀

गुद[1] पायु[2] रपान[3] ञ्च, त्रिवलीक[4] च्युति[5] र्वलि[6] ।
शकृद्द्वार[7] मधोमर्म[8], गुदनामानि मन्यते ॥९८८॥

❀ विटपनाम ❀

अण्डमूलं महावीज्यं[1], विटप[2] ञ्चापि कथ्यते ।

❀ वङ्क्षण-सक्थिनामानि ❀

उरुसन्धि वंङ्क्षण:[1] स्या-दुरु [1] सक्थि[2] स्तत् पर्व्वं तु ॥६८६॥

❀ जानुनामानि ❀

अष्ठीवान्[1] नलकील[2] श्च, जानु[3] र्नाम त्रयं भवेत् ।

पश्चाद्भागो ऽस्य मन्दिर:[1] कपोली[1] त्वग्रिम पुन ॥६६०॥

❀ जङ्घानामानि ❀

जङ्घा[1] च प्रसृता[2] नाम, नलकिनी[3] निगद्यते ।

अग्रजङ्घा[1] प्रतिजङ्घा[2], जङ्घाग्रभाग उच्यते ॥६६१॥

❀ पिण्डिकानाम ❀

पिचण्डिका[1] पिण्डिका[2] च, कथ्यते कोविदै किल ।

❀ घुण्टकनामानि ❀

स्याद् गुल्फ[1] श्चरणग्रन्थि[2], घुंण्टको[3] घुटिको[4] घुट [5] ॥६६२ ।

❀ चरणनामानि ❀

चरण[1] श्चलन.[2] पाद [3], क्रम[4] श्च क्रमण:[5] पद:[6] ।

अंह्रि[7] रङ्घ्र[8] स्तथा पत्[9] पाद्[10],
चेति नामानि मन्यते ॥६६३॥

गोहर[1] पादमूल[2] स्यात्ः पार्ष्णि[1] स्तु घुटयोरधः ।
पादस्याग्रविभागो हि, पादाग्र प्रपद तथा ॥६६४॥

कथ्यतेऽपि पुन' क्षिप्र[1]-मङ्गुष्ठाङ्गुलिमध्यत ।
कूर्च[1] क्षिप्रस्योपर्यंह्रि-स्कन्ध[1] कूर्चशिरः[2] समे ॥६६५॥

पादतलस्य मध्ये तत्, स्यात् तलहृदयं[1] तलम्[2] ।

## ❀ तिलकनामानि ❀

शरीरे कृष्णचिह्नं हि, कथ्यते तिलकारक.[1] ॥६६६॥

तिलक[2] स्चापि पिप्लु[3] श्च, जडुलो[4] ऽपि तथैव हि ।
कालक[5] श्चेति नामानि, भवन्ति तिलकस्य वै ॥६६७॥

रसा[1]-ऽसृग्[2]-मांस[3]-मेदो[4]-ऽस्थि[5]-मज्जा[6] शुक्राणि[7] धातवः ।
सप्तैव दश वैकेषां, रोम[8]-त्वक्[9]-स्नायुभि[10] सह ॥६६८॥

## ❀ रसनामानि ❀

अग्नि सम्भव[1] आत्रेयो[2] ऽसृक्कर[3] षड्रसासव[4] ।
मूलधातु[5] र्महाधातु[6] र्घनधातु[7] स्तथा रस[8] ॥६६९॥

पुन श्चाऽऽहारतेलोऽपि, रसनाम निगद्यते ।

## ❀ रक्तनामानि ❀

आग्नेयं[1] रुधिरं[2] रक्तं[3], रसतेज[4] श्च लोहितम्[5] ॥१०००॥

अस्त्र[6] मसृक्[7] च वाशिष्ठं[8], प्राणदं[9] क्षतजं[10] तथा ।
विस्रं[11] रसभव[12] शोध्यं[13],
मांसकारि[14] च शोणितम्[15] ॥१००१॥

कीलाल[16] माऽऽसुर[17] चेति, रक्तनामानि सन्तिवै ।

## ❀ मांसनामानि ❀

आमिषं[1] पिशितं[2] मांसं[3], काश्यपं[4] पललं[5] पलम्[6] ॥१००२॥

जङ्गलं[7] लेपनं[8] कीन[9]-मुद्धसं[10] तरस[11] तथा ।
उद्ध[12] रक्तभवं[13] क्रव्य[14]-माऽऽरटं[15] च समारटम्[16] ॥१००३॥

रक्ततेज[17] श्च मेदस्कृत्[18], मांसनामानि मन्यते ।
पुन र्मांसलता नाम, पेश्य.[1] पेशी[2] च कथ्यते ॥१००४॥

बुक्को[1] बुक्का[2] च वृक्का[3] हृद्[4], हृदयं[5] क्षुरसं[6] तथा ।
अग्रमांस हि नामानि, मन्यते पण्डितो जन. ॥१००५॥

शुष्कमांसमुतप्तं[1] च, वल्लूर[2] वल्लुर[3] पुन. ।
पूयं[1] दुष्य[2] पण्डितेन, दुर्गन्धमांस मुच्यते ॥१००.॥

## ❀ मेदनामानि ❀

अस्थिकृद्[1] मांसजं[2] मेदो[3], मासतेज[4] श्च गौतमम्[5] ।

तथा वपा[6] वसा[7] चेति, मेदनामानि मन्यते ॥१००७॥

❀ मस्तिष्कनामानि ❀

मस्तिष्को[1] मस्तकस्नेहो[2], गोर्दं स्यात् मस्तुलुङ्गक[3] ।

❀ अस्थिनामानि ❀

अस्थि[1] सार[2] स्तथा कुल्यं[3], कीकसं[4] देहधारकम्[5] ॥१००८॥

मेदस्तेज[6] श्च मेदोज[7], मांसपित्तं[8] च मज्जकृत्[9] ।
भारद्वाजं[10] तथा हड्डु[11], श्वदयित[12] च कर्कर:[13]॥१००९॥

अस्थि नामानि सर्वाणि, जानीयुः पण्डिताः सदा ।
करोटि[1] श्च करोटी[2] च, शिरसो ऽस्थनि कथ्यते ॥१०१०॥

कपाल[1] कर्परौ[2] तुल्यौ, शकल[3] ञ्चापि मन्यते ।
कशारुका[1] कशेरुका[2], पृष्ठस्यास्थिन निगद्यते ॥१०११॥

नलक[1] कथ्यते शाखा-स्थनि वै वङ्क्रि[1]-पर्शुके[2] ।
पाश्र्वास्थिन मन्यते देहा-ऽऽस्थि त्वस्थिपञ्जर[1] पुनः ॥१०१२॥

करङ्क[2] श्चापि कङ्काल[3], कोविदै कथ्यते किल ।

❀ मज्जानामानि ❀

अस्थिस्नेहो[1] ऽस्थितेजो[2] ऽस्थि,-
सम्भव[3] कौशिक[4] पुन ॥१०१३॥

मज्जा[5] शुक्रकर[6] श्चेति, मज्जा–नामानि मन्यते ।

## ❀ शुक्रनामानि ❀

शुक्र[१] वीर्य[२] बलं[३] बीजं[४], पुंस्त्वं[५] मज्जसमुद्भवम्[६] ॥१०१४॥
आनन्दप्रभवं[७] किट्ट-वर्जितं[८] रेत[९] इन्द्रियं[१०] ।
प्रधानधातु[११] पौरुषं[१२], चेति शुक्रस्य कथ्यते ॥१०१५॥

## ❀ रोमनामानि ❀

रोम[१] लोम[२] परित्राणं[३], तनुरुहं[४] तनूरुहम्[५] ।
कूपजो[६] मांसनिर्यास[७], त्वग्मलं[८] बालपुत्रक[९] ॥१०१६॥

## ❀ त्वङ्नामानि ❀

असृग्धरा[१] ऽजिनं[२] चर्म[३], त्वक्[४] कृत्तिः[५] छादनी[६] छवि[७] ।
अजिनं[१] चर्म[२] कृत्ति[३] स्तु, नामानि मृगचर्मणः ॥१०१७॥

## ❀ स्नायुनामानि ❀

स्नायु[१] स्नसा[२] नसा[३] स्नावा[४], वस्नसा[५] सन्धिबन्धनम्[६] ।
तन्त्री तथा[७] नखारु[८] श्च, स्नायु नामानि मन्यते ॥१०१८॥

## ❀ नाडीनामानि ❀

सिराः[१] शिरा[२] श्च नाड्य[३] श्च, धमनयो[४] भवन्ति वै ।
नाटिका[१] च नडि[२] र्नाडि[३], रित्यपि मन्यते बुधैः ॥१०१९॥

## ❀ महास्नायुनाम ❀

कण्डरा[१] च महास्नायु, र्महानसा निगद्यते ।

❀ मलनाम ❀

कथ्यते तन् मलं[1] किट्टं[2], दूषीका[1] दूषिका[2] ऽक्षिजम् ॥१०२०॥

जीह्वामलं कुलुक[1] स्याद्, दन्त्यमलं तु पिप्पिका[1] ।
कर्णमल हि पिञ्जूष [1], शिङ्घाणो[1] नासिकामलम् ॥१०२१॥

शिङ्घाणक[2] श्च सिङ्घाण[3], सिंहाणं[6] सिंहानं[5] तथा ।
सर्वाण्येतानि नामानि गीतानि पण्डितै. जनै ॥१०२२॥

❀ स्यन्दिनीनामानि ❀

सृणीका[1] सृणिका[2] लाला[3], ऽऽस्यास्रव:[4] स्यन्दिनी[5] तथा ।
वै कफकूचिका[6] चेति, नामानि प्रथितानि हि ॥१०२३॥

❀ मूत्रनामानि ❀

प्रस्रावो[1] नृजल[2] मूत्र[3], मेहो[4] वस्तिमल[5] स्रव [6] ।
कथ्यन्ते मूत्रनामानि, लिङ्गमल तु पुष्पिका[1] ॥१०२४॥

❀ विष्ठानामानि ❀

उच्चारो[1] ऽवस्करो[2] वर्चो[3], वर्चस्क[4] शमल[5] शकृत्[6] ।
विट्[7] विष्ठा[8] ऽशुचि[9] गूथ[10] वै,
पुरीष[11] चेति मन्यते ॥१०२५॥

❀ वेषनामानि ❀

वेषो[1] नेपथ्य[2]-माऽऽकल्प [3], वेशो[4] ऽपि च प्रयुज्यते ।

परिकर्मा[1]-ऽङ्गसंस्कार, उद्वर्तन[1] मुत्सादनम्[2] ॥१०२६॥
उच्छादन[3] मपि ज्ञेय-मङ्गरागो[1] विलेपनम्[2] ।
स्यात् समालभनं[1] चर्चा[2], चर्चिक्यं[3] चन्दनादित. ॥१०२७॥

※ मण्डननामानि ※

प्रसादन[1] मण्डन[2] ञ्च, प्रतिकर्मा[3] ऽपि ज्ञायताम् ।

※ मार्जनानामानि ※

मृजा[1] च मार्जना[2] मार्ष्टि[3], देहस्वच्छ क्रिया भवेत् ॥१०२८॥

※ चूर्णनामानि ※

वासयोग[1] श्च चूर्ण[2] स्याद्, पिष्टात[3]-पटवासकौ[4] ।
गन्धमाल्यादिना यस्तु, संस्कार' सो ऽधिवासनम्[1] ॥१०२९॥
निर्वेश[1] उपभोग[2] श्च, स्त्र्याद्युपभोग उच्यते ।

※ स्नाननामानि ※

आप्लाव[1] आप्लव[2] स्नानं[3], सवन[4] चापि मन्यते ॥१०३०॥

※ यक्षकर्दमनाम ※

कर्पूरा–ऽगुरु-कक्कोल,-कस्तूरी–चन्दन द्रवै ।
स्याद् यक्षकर्दमो[1] मिश्रै, र्वर्त्ति[1] गात्रानुलेपनी[2] ॥१०३१॥

चन्दना-ऽगरु-कस्तूरी,-कुङ्कुमै स्तु चतुःसमम्[1] ।
स लेपः कथितः शास्त्रे, प्रसिद्धोऽपि महीतले ॥१०३२॥

❀ अगरुनामानि ❀

अगु[1]-र्वगरु[2] लोह[3] च, कृमिजग्धं[4] च जोङ्गकम्[5] ।
वशकं[6] वशिका[7] शृङ्ग[8], वंशाभं[9] शीर्षकं[10] तथा ॥१०३३॥

अनार्यज[11] च राजर्हं[12], कृमिज[13] च वरद्रुम[14] ।
प्रकर[15] प्रवरं[16] गन्ध-दारु[17] च मृदुल[18] लघु[19] ॥१०३४॥

तथा परमद[20] श्चेति, नामान्यपि भवन्ति हि ।
मल्लिगन्धि[1] च मङ्गल्या[2], विशिष्टमगुरु पुनः ॥१०३५॥
कालागरु[1] काकतुण्ड[2], कथ्यते ऽप्यगुरु र्बुधैः ।

❀ चन्दननामानि ❀

एकाङ्ग[1] गन्धसार[2] श्च, भद्रश्री[3] फलकी[4] तथा ।
मलयज[5] श्च श्रीखण्ड[6], चन्दने[7] रोहणद्रुम[8] ॥१०३६॥

गोशीर्ष[1] स्तैलपर्णिकः[2], प्रख्यात हरिचन्दनम्[3] ।
कुचन्दन[1] तु पत्राङ्ग[2],-रञ्जन[3] रक्तचन्दनम्[4] ॥१०३७॥

तिलपर्णी[5] ताम्रसारं[6], पतङ्ग[7] तिलपर्णिका[8] ।
सर्वाण्येतानि नामानि, जानीयाच्चन्दनस्य हि ॥१०३८॥

## ❀ जातिफलनामानि ❀

जातिफलं[1] जातीफलं[2], पुटकं[3] मदशौण्डकम्[4] ।
कोशफलं[5] तथा जाति-कोशं[6] सौमनसं[7] पुनः ॥१०३९॥

## ❀ कर्पूरनामानि ❀

कर्पूरो[1] घनसार[2] श्च, सिताभ्रो[3] हिमवालुका[4] ।
चन्द्रः[5] कर्पूरवाचो वै, प्रयोगे दृश्यते सदा ॥१०४०॥

## ❀ कस्तूरीनामानि ❀

कस्तूरी[1] गन्धधूली[2] च, कथ्यते मृगनाभिजा[3] ।
मृगनाभि[4] पुनश्चैव, मृगमदो[5] ऽपि मन्यते ॥१०४१॥

## ❀ केशरनामानि ❀

केशर[1] कुङ्कुमं[2] रक्तं[3], कालेय[4] करटं[5] वरम्[6] ।
कुसुमान्त[7] कुसुम्भं[8] च, सङ्कोचपिशुनं[9] तथा ॥१०४२॥
जपापुष्प[10] जवापुष्पं[11], पिशुनं[12] वासनीयकम्[13] ।
कुसुमान्तं[14] च संकोचं[15], काश्मीरजन्म[16] जागुडम्[17]॥१०४३॥
प्रियङ्गु[18] पीतकाबेरं[19], पीतनं[20] चापि दीपनम्[21] ।
वाह्लीक[22] वाह्लिकं[23] वर्ण्य[24],
वर्णं[25] लोहितचन्दनम्[26] ॥१०४४॥

घोर[27] च घुसृणं[28] धीरं[29],
पुष्परज[30] श्च गौरवम्[31] ।
असृक्संज्ञ[32]–पर्याये[33] ऽपि,
वह्निशिख[34] च कथ्यते ॥१०४५॥

❀ लवङ्गनामानि ❀

श्रीसंज्ञ[1] स्यात्लवङ्ग[2] श्री-पर्यायं[3] देवकुसुमम्[4] ।

❀ कोलकनामानि ❀

कक्कोलकं[1] च कोलक[2], कोशफलं च कथ्यते ॥१०४६॥

❀ कालीयकनामानि ❀

कालयक[1] तु कालानु-सार्य[2] जायक[3]-जायके[4] ।

❀ विशिष्टधूपनामानि ❀

रालः[1] स्यात् सालवेष्ट[2] श्च, यक्षधूपो[3] ऽग्निवल्लभ.[4] ॥१०४७॥
सर्जमणि[5] र्बहुरूप.[6], सर्जरस[7] सर्वरस[8] ।
सिल्ह[1] स्तु सिल्हक[2] श्चापि, तुरुष्को[3] यावन[4] स्तथा ॥१०४८॥
वृकधूप[5] श्च कृत्रिम-धूप[6] श्च पिण्डक[7] पुनः ।
विशिष्ट गन्धवस्तुकं, प्रसिद्धं कथ्यते वुधै ॥१०४९॥

## ❀ विविधधूपनामानि ❀

पायसो[1] क्षीरधूप[2] श्च, दध्याह्वयो[3] घृताह्वयः[4] ।
क्षीराह्वय[5] श्च श्रीवासः[6], श्रीवेष्टः[7] सरलद्रवः[8] ॥१०५०॥

स्थानात् स्थानान्तरं गच्छन्, धूपो गन्धपिशाचिका[1] ।

## ❀ हस्तबिम्बनाम ❀

स्थासको[1] हस्तबिम्बं[2] च, कथ्यते हस्तथापकः ॥१०५१॥

## ❀ अलङ्कारनामानि ❀

आभरण[1]-मलङ्कारः[2], परिष्कार[3] श्च भूषणम्[4] ।
ज्ञायतां भूषणं विश्वे, विभिन्न भूषणं पुनः ॥१०५२॥

## ❀ विभिन्नभूषणनामानि ❀

चूडारत्नं[1] चूडामणि[2], शिरोरत्नं[3] शिरोमणिः[4] ।
तरलो[1] नायक[2] श्चापि, हारान्तर्मणि[4] उच्यते ॥१०५३॥

## ❀ मुकुटनामानि ❀

उष्णीष[1] मुकुट[2] मौलिः[3], किरीटं[4] मकुट[5] स्तथा ।
कोटीरं चेति नामानि, मन्यते मुकटस्य हि ॥१०५४॥

## ❀ मालानामानि ❀

मूर्ध्नि माल्य[1] ञ्च माला[2] च, स्रक्[3] तथा पुष्पदाम[4] च ।

केशमध्यगत माल्यं, गर्भक[1] कथ्यते किल ॥१०५५॥

प्रभ्रष्टक[1] शिखालम्बि, पुष्पमाला निगद्यते ।
ललामकं[2] पुरोन्यस्तं, पुष्पमाला हि मन्यते ॥१०५६॥

वैकक्ष[1] वक्षसि तिर्यक्, सापि माला हि कथ्यते ।
प्रालम्ब[1]-मृजुलम्बि च, माला हि मन्यते बुधै. ॥१०५७॥

सन्दर्भो[1] श्रन्थनं[2] गुम्फो[3], ग्रन्थनं[4] रचना[5] पुनः ।
प्रतियत्न.[5] परिस्यन्द.[6], पुष्पमाला विशेषक. ॥१०५८॥

❀ तिलकनामानि ❀

चित्रं च चित्रकं[2] पुण्ड्र[3], तिलकं[4] च विशेषक[5] ।
पुन स्तमालपत्र[6] स्यात्, केशरादिसमाश्रितम् ॥१०५९॥

❀ अवतंसनामानि ❀

अवतंसो[1] वतंस[2] श्चा-ऽऽपीड[3] श्च शेखर[4] स्तथा ।
उत्तंसो[5] ऽपि च नामास्ति, शिरसः स्रजि कुत्रचित् ॥१०६०॥

❀ कर्णपूरनामानि ❀

उत्तंस[1] श्चाऽवतंस[2] श्च, कर्णपूर.[3] श्रुते स्रजि ।

❀ पत्रलेखानामानि ❀

पत्रभङ्गिः[1] पत्रभङ्गी[2], पत्रलेखा[3] पत्रलता[4] ॥१०६१॥

पत्रवल्लि[5] पत्रवल्ली[6], पत्राङ्गुली[7] पत्राङ्गुलि[8]।
स्तनादिभूषणे पत्र-वल्लरी[9] पत्रमञ्जरी[10] ॥१०६२॥

❀ पत्रपाश्यानाम ❀

प्रोक्ता ललाटिका[1] पत्र-पाश्या[2] च भालभूषणे।

❀ वालपाश्यानामानि ❀

पार्यतथ्या[1] पारतथ्या[2], वालपाश्या[3] च कथ्यते ॥१०६३॥
पुनः पर्यवतथ्या[4] हि, केशबन्धनभूषणम्।

❀ कर्णिकानाम ❀

कथ्यते कर्णिका[1] किल, कोविदैः कर्णभूषणम् ॥१०६४॥

❀ कुण्डलनामानि ❀

कुण्डल[1] ताडपत्रं[2] च, ताडङ्क.[3] कर्णवेष्टक[4]।
कर्णादर्श[5] श्च सौवर्ण[6], कर्णयोः स्वर्णभूषणे ॥१०६५॥

उत्क्षिप्तिका[1] च कर्णान्दुः[2], कर्णान्दूः[3] कर्णभूषणे।
बालिका[1] वालिका[2] चाऽस्ति, भूषणं कर्णपृष्ठगा ॥१०६६॥

❀ कण्ठभूषानाम ❀

ग्रैवेयक[1] कण्ठभूषा[2], ग्रीवाया भूषण भवेत्।
ललन्तिका लम्बमाना[1], हेम्ना प्रालम्बिका[1] कृता ॥१०६७॥

मौक्तिकै श्च कृता माला, स्यादुर: सूत्रिका[1] किल ।

## ❀ हारनामानि ❀

हारो[1] मुक्ता प्रालम्ब[2] श्च, मुक्तालता[3] तथैव च ।
मुक्तावली[4] च मुक्तास्रक्[5], मुक्ताकलाप[6] उच्यते ।।१०६८।।

देवच्छन्द:[1] शतमिन्द्र-च्छन्द:[2] साष्ट सहस्रकम् ।
तस्यार्धं विजयच्छन्दो[3], हार[4] श्चाष्टोत्तर शतम् ।।१०६९।।

रश्मिकलाप[5] स्तस्यार्धं, द्वादश स्त्वर्धमाणव[6] ।
चतुर्विंशत्यर्धगुच्छ:[7], पञ्च हारफलं[8] लता: ।।१०७०।।

चतु: षष्टि रर्धहार[9], गुच्छ:[10] स्यात् षोडशद्वयम् ।
माणव:[11] षोडश श्चैव, मन्दरो[12] ऽष्ट युत स्तथा ।।१०७१।।

चत्वारो गोस्तन[13] श्चैव, गोपुच्छो[14] ऽपि द्विक: किल ।
यष्टि भेदादिमे हारा, चतुर्युक्ता दशस्मृता: ।।१०७२।।

एकावली[1] कण्ठिका[2] च, लतैकात्वेकयष्टिका[3] ।
कथ्यते ऽप्यत्र नक्षत्र-माला[1] तत्सङ्ख्यमौक्तिकै: ।।१०७३।।

## ❀ केयूरनामानि ❀

अङ्गद केयूर[2] चैव, बाहुभूषा[3] च मन्यते ।

## ❀ वलयनामानि ❀

आवाप[1] पारिहार्य[2] श्च, परिहार्य[3] प्रतिसर:[4] ।।१०७४।।

कङ्कणं[5] हस्तसूत्रं[6] च, कटक[7] करभूषणम्[8] ।
वलय[9] चेति नामानि, वदन्ति विबुधा सदा ।।१०७५।।

❀ ऊर्मिकानाम ❀

भवेदङ्गुलि भूषाया, मङ्गुलीयक[1] -मूर्मिका[2] ।
पुनश्च साक्षरा सापि, भवत्यङ्गुलिमुद्रिका[1] ।।१०७६।।

❀ कटिसूत्रनामानि ❀

कटीसूत्रं[1] कलाप[2] श्च, काञ्ची[3] च कटमालिका[4] ।
रशना[5] रसना[6] चैव, सारसनं[7] च सप्तकी[8] ।।१०७७।।

मेखला[9] लालिनी[10] चेति, स्त्रीकटिस्था हि कथ्यते ।
पुन. सा पुंस्कटिस्था वै, शृङ्खल मन्यते बुधै ।।१०७८।।

❀ घर्घरीनामानि ❀

किङ्कणी[1] किङ्कणि[2] विद्या[3], किङ्किणी[4] किङ्किणि[5] स्तथा ।
विद्यामणि[6] घर्घरी[7] स्यात्, कङ्कणी[8] क्षुद्रघण्टिका[9] ।।१०७९।।

❀ नूपुरनामानि ❀

पादाङ्गदं[1] तुलाकोटिः[2], नूपुरं[3] पादनालिका[4] ।
शिञ्जिनी[5] पादशीली[6] च, पादशाली[7] च हंसकम्[8] ।।१०८०।।

मन्दीरं[9] चापि मञ्जीर[10], वै पादकटकं[11] पुन ।
नूपुरस्येति नामानि, विज्ञायन्ते सदा बुधैः ।।१०८१।।

## ❀ पादपालिकानामानि ❀

पादाङ्गुलीयकं[1] पाद-पालिका[2] पादकीलिका[3] ।
चरणाङ्गुलि भूषाया, नामत्रयं च ज्ञायताम् ॥१०८२॥

## ❀ वस्त्रनामानि ❀

अम्बर[1] मंशुकं[2] वस्त्रं[3], वास[4] श्च वसनं[5] पट[6] ।
आच्छादन[7] च सिक्[8] सत्र[9],
चीरं[10] चेल[11] च कर्पटम्[12] ॥१०८३॥

आच्छाद:[13] सिचय[14] श्चापि,
वस्नं[15] निवसनं[16] पुनः ।
प्रोत[17] श्चैतानि नामानि, वस्त्रस्य कथ्यते बुधैः ॥१०८४॥

अञ्चलं[1] वस्त्रप्रान्त स्याद्, वर्ति[1] र्वस्ति[2] दशाः[3] पुन ।
वस्त्रपेशी[4] च प्रख्याता, शोभाया[1] वर्द्धनी शुभा ॥१०८५॥

पत्रोर्ण[1] धौतकौशेय[2], क्षौमंवस्त्रं हि कथ्यते ।
मूर्धवेष्टन[1]-मुष्णीष[2], स्यात शिरसि वेष्टनम् ॥१०८६॥

धौतयो र्वस्त्रयो र्युग्म,-मुद्गमनीय[1] मुच्यते ।
त्वक्-फल-कृमि-रोमेभ्य , सम्भवात् तच्चतुर्विधम् ॥१०८७॥

क्षौम[1]-कार्पास[2]-कौशेय[3],-राङ्कवादिविभेदतः ।

## ❀ शणादिवस्त्रनामानि ❀

दुकूलं[1] स्याद् दुगूलं[2] च, क्षौमं[3] शणादिजं पटम् ।
कार्पासं[1] बादरं[2] फालं[3], कार्पासोत्थं हि कर्पटम् ॥१०८८॥
कौशेयं[1] कृमिकोशोत्थं, कथ्यते क्षोमवस्त्रकम् ।
मृगस्य रोमजं वस्त्रं, राङ्कवं[1] मृगरोमजम्[2] ॥१०८९॥

## ❀ कम्बलनामानि ❀

ऊर्णायु[1] राविक[2] श्चैव, रल्लकः[3] कम्बल[4] स्तथा ।
औरभ्र[5] श्चैति नामानि, मन्यन्ते कम्बलस्य हि ॥१०९०॥

## ❀ अनाहतनामानि ❀

तन्त्रकं[1] निष्प्रवाणि[2] स्या-न्नवं वस्त्रं त्वनाहतं[3] ।

## ❀ प्रावरणनामानि ❀

प्रच्छादनं[1] च संव्यानं[2], प्रावरणो[3]-त्तरीयके[4] ॥१०९१॥

## ❀ उत्तरासङ्गनामानि ❀

वैकक्ष[1] मुत्तरासङ्गः[2], स्यात् प्रावारो[3] बृहतिका[4] ।

## ❀ स्थूलशाटनाम ❀

वराशिः[1] स्थूलशाट[2] श्च, कथ्यते स्थूलवस्त्रकम् ॥१०९२॥

## ❀ परिधाननामानि ❀

अधांशुक[1]-परिधाने[2], उपसंव्यान[3]-मित्यपि ।
निवसनं[4] चान्तरीय[5],-मधोवस्त्रं निगद्यते ॥१०६३॥

## ❀ नीवीनाम ❀

उच्छ्रय[1] श्चापि नीवी[2] वै, तद्ग्रन्थिः कथ्यते बुधैः ।

## ❀ चण्डातकनाम ❀

वरस्त्र्यर्धोरुकांशुकं, चलनक[1] श्चण्डातकम्[1] ॥१०६४॥
चलनी[1] त्वितरस्त्रिया, कथ्यतेऽर्धोरुकांशुकम् ।

## ❀ कञ्चुकनामानि ❀

कञ्चुलिका[1] च कूर्पास[2],-आङ्गिका खलु कञ्चुके[3] ॥१०६५॥
चोलः[4] कूर्पासक[5] श्चेति नामानि कञ्चुकस्य हि ।

## ❀ शाटीनामानि ❀

शाटी[1] च शाटक[2] श्चोटी[3], कथ्यते शाटकस्य वै ॥१०६६॥

## ❀ नीशारनामानि ❀

द्विगुणक[1] श्च नीशार[2], हिमवातापहांशुकम्[2] ।
वरक[3] श्चेति नामानि, मन्यते वरकस्य वै ॥१०६७॥

## ❀ कच्छानामानि ❀

कच्छाटिका[1] च कच्छाटी[2], कच्छा[3] कक्षा[4] च कथ्यते ।

## ❀ कौपीननामानि ❀

कक्षापट[1] श्च कौपीनं[2], कक्षापुटो[3] ऽपि मन्यते ॥१०९८॥

## ❀ नक्तकनाम ❀

नक्तक[1] कर्पट[2] श्चैव, प्रोक्तं वस्त्रस्य खण्डकम् ।

## ❀ उत्तरच्छदनामानि ❀

निवुलकं[1] च प्रच्छद-पट[2] स्तथोत्तरच्छद[3] ॥१०९९॥

निचोलो[4] निचुल[5] श्चोक्तं, शय्याङ्गस्य वस्त्रकम् ।

## ❀ पूर्णपात्रनाम ❀

बलदाकृष्य सुहृद्भि, र्यदुत्सवेषु गृह्यते ॥११००॥

वस्त्रमाल्यादि तत् पूर्ण-पात्रं[1] पूर्णानकं[2] पुनः ।

## ❀ आप्रपदीननाम ❀

तत् स्यादाप्रपदीन[1] श्च, व्याप्नोत्याप्रपदं हि यत् ॥११०१॥

## ❀ भिक्षुसङ्घाटीनाम ❀

चीवरं[1] भिक्षुसङ्घाटी[2], भिक्षो र्वस्त्रं हि मन्यते ।

### ❀ जीर्णवस्त्रनाम ❀

पटच्चरं[1] तथा जीर्ण-वस्त्र वदन्ति पण्डिता: ॥११०२॥

### ❀ छिद्रवस्त्रनामानि ❀

छिद्रवस्त्रं[1] तथा शाणी[2]- गोणी[3] चेति निगद्यते ।

### ❀ क्लिन्नवासनाम ❀

जलार्द्रा[1] क्लिन्नवासो[2] ऽपि, आर्द्रवस्त्र निगद्यते ॥११०३॥

### ❀ पर्यङ्कनामानि ❀

पर्यस्तिका[1] च पर्यङ्क[2], पल्यङ्क[3] श्चावसक्थिका[4] ।
परिकर[5] श्च नामानि, पर्यङ्कस्य हि मन्यते ॥११०४॥

### ❀ परिस्तोमनामानि ❀

वर्णो[1] वर्णपरिस्तोम:[2], परिस्तोम:[3] कुथ[4] स्तथा ।
आस्तर[5] आस्तरञ्च[6], प्रवेणी[7] नवत[8] पुन ॥११०५॥

### ❀ जवनीनामानि ❀

अपटी[1] प्रतिसीरा[2] च, जवनी[3] काण्डपट[4] स्तथा ।
स्यात्तिरस्करिणी[5] नाम,-ज्ञायता यमनी[6] पुन ॥११०६॥

### ❀ वितानन्नामानि ❀

चन्द्रोदयो[1] वितान[2] स्या-दुल्लोच[3] कदक[4] स्तथा ।

### ❀ दूष्यनाम ❀

दूष्यं[1] स्थूलं च वस्त्रस्य, गृहं प्रोक्तं विशालकम् ॥११०७॥

लघुगृहं तु तस्त्रस्य, केडिका[1] पटकुटो[2] पुनः ।
गुणलयनिका[3] नाम, बुधै विज्ञायते तथा ॥११०८॥

### ❀ संस्तरनामानि ❀

स्त्रस्तर.[1] संस्तर[2] श्चैव, प्रस्तर[3] शयितु भवेत् ।

### ❀ शय्यानामानि ❀

शयनं[1] शयनीयं[2] च, तल्पं[3] च तलिमं[4] तथा ॥११०९॥

शय्या[5] चैतानि नामानि, मन्यते हि महीतले ।

### ❀ खट्वानामानि ❀

खट्वा[1] पर्यङ्क[2]· पल्यङ्कौ[3],
मञ्च[4] स्यान् मञ्चक[5] पुन ॥१११०॥

### ❀ उच्छीर्षकनामानि ❀

उपधान[1] मुपबर्हं[2], श्चोक्त मुच्छीर्षकं[3] तथा ।

### ❀ पतद्ग्रहनामानि ❀

पाल[1] पतद्ग्रह[2] श्चापि, पतद्ग्राहः[3] प्रतिग्रहः[4] ॥११११॥

प्रतिग्राह[५] श्च नामास्ति, शूत्पात्र पञ्चनामकम् ।

॥ दर्पणनामानि ॥

आदर्श[१] श्चात्मदर्श[२] श्च, दर्पणो[३] ऽपि प्रयुज्यते ॥१११२॥

मकुरो[४] मुकुर[५] श्चेति, नामानि दर्पणस्य हि ।

॥ वेत्रासननाम ॥

वेत्रासन[१] माऽऽसन्दी[२] च, वेत्रेण निर्मितं भवेत् ॥१११३॥

॥ आसननामानि ॥

आसनं[१] विष्टर[२] पीठ[३], चेति नामानि मन्यते ।

॥ कसिपुनाम ॥

कसिपु.[१] कशिपु[२] श्चापि, वस्त्र-भोजनयोः स्मृतः ॥१११४॥

॥ औशीरनाम ॥

औशीरं[१] शयने प्रोक्त,-मासने चापि कथ्यते ।

॥ लाक्षानामानि ॥

लाक्षा[१] राक्षा[२] क्षतघ्ना[३] च, रङ्गमाता[४] द्रुमालयः[५] ॥१११५॥

प्रोक्तं पलङ्कपा[६] नाम, जतु[७] वै कृमिजा[८] तथा ।

॥ अलक्तनामानि ॥

अलक्तो[१] ऽलक्तको[२] यावो[३], यावक[४] श्चापि तद्रस ॥१११६॥

❋ अञ्जननाम ❋

अञ्जनं[1] कज्जल चेति, ख्यात सर्वत्र दृश्यते।

❋ दीपनामानि ❋

प्रदीपो[1] दीपको[2] दीपो[3], दशाकर्षो[4] दशेन्धन[5] ॥१११७॥

स्नेहप्रिय[6] श्च कज्जल-ध्वजो[7] गृहमणि[8] स्तथा।

❋ व्यजननामानि ❋

कथ्यते तालवृन्तं[1] तु, व्यजनं[2] वीजनं पुनः ॥१११८॥

मृगस्य चर्मणो नाम, धवित्रं[1] मन्यते खलु।

आलावर्त्त[1] तु वस्त्रेण, निर्मिते व्यजने भवेत् ॥१११९॥

❋ केशमार्जननामानि ❋

प्रसाधनः[1] कङ्कत[2] श्च, केशमार्जन[3] मुच्यते।

❋ गुडनामानि ❋

गिरिगुडो[1] गुडो[2] गिरि[3], गिरिक[4] श्च गिरीयकः[5] ॥११२०॥

गिरियक[6] स्तथा बाल-क्रीडनकं[7] च कथ्यते।

❋ कन्दुकनामानि ❋

कन्दुको[1] गेन्दुक[2] श्चैव, गन्दुकोऽपि प्रयुज्यते ॥११२१॥

## ❀ नृपनामानि ❀

भूभृत्[1] भूप[2] श्च भूपालो[3], लोकपाल[4] श्च पार्थिवः[5] ।
मूर्धाभिषिक्त[6]-मूर्धान्व-सिक्तौ[7] राजा[8] च राट्[9] तथा ॥११२२॥

महीक्षित्[10] मध्यलोकेशो[11], नरपालो[12] नृप [13] पुन. ।
प्रजाप.[14] पृथिवीशक्रो[15], मण्डलाधीश[1]-मध्यमौ[2] ॥११२३॥

सम्राट्[1] तु शास्ति यो भूपान्, य सर्वमण्डलाधिपः ।
योऽयजत् राजसूयं च, स सम्राट् मन्यते जनै. ॥११२४॥

## ❀ चक्रवर्त्तिनामानि ❀

चक्रवर्त्ती[1] सार्वभौम [2], सैवाधीश्वर[3] उच्यते ।
अस्यामवसर्पिण्या ते, द्वादश भारतेऽजनि ॥११२५॥

## ❀ द्वादशचक्रवर्त्तिनामानि ❀

भरत[1] आर्षभि[2] स्तत्र, सगर[1] श्च सुमित्रभू [2] ।
वैजयि[1] मंघवा[2] चाथा-श्वसेननृपनन्दन.[1] ॥११२६॥

तथा सनत्कुमारो[2] ऽथ, शान्ति [1] कुन्थु[1] ररो[1] जिना ।
कार्त्तवीर्य[1] सुभूमो[2] ऽथ, पद्मः[1] पद्मोत्तरात्मज [2] ॥११२७॥

हरिसुतो[1] हरिषेणो[2], विजयनन्दनो[1] जय [2] ।
ब्रह्मदत्तो[1] ब्रह्मसूनु [2], सर्वेऽपीक्ष्वाकुवंशजा ॥११२८॥

जैनागमेषु प्रोक्तानि, नामानि चक्रवर्तिनाम् ।

❀ नवार्द्धचक्रवर्त्ति-वासुदेवनामानि ❀

प्राजापत्य[1] स्त्रिपृष्ठो[2] ऽथ, द्विपृष्ठ[1]-ब्रह्मसम्भवो[2] ॥११२९॥

स्वयम्भू[1] रुद्रतनय[2], सोमभू[1] पुरुषोत्तम[2] ।
शैव.[1] पुरुष[2] सिंहोपि महाशिरस्समुद्भव[1] ॥११३०॥

पुरुषपुण्डरीक[2] स्तु, दत्तो[1] ऽग्निसिंहनन्दन[2] ।
दाशरथि[1] र्नारायण[2], कृष्ण[1] स्तु वसुदेवभूः ॥११३१॥

वासुदेवा-नवैतानि, कृष्णवर्णाञ्जितानि वै ।

❀ नवबलदेवनामानि ❀

बलदेवा· नव शुक्ला, कथ्यते पुन रत्र हि ॥११३२॥

अचलो[1] विजयो[2] भद्र[3], सुप्रभो[4] ऽपि सुदर्शन[5] ।
आनन्दो[6] नन्दन[7] श्चैव, पद्मो[8] राम[9] स्तथा किल ॥११३३॥

❀ नवप्रतिवासुदेवनामानि ❀

अथ विष्णुद्विषः[1] प्रोक्ता तन्नामानि नवाऽत्र हि ।
अश्वग्रीव[1] श्च तारक[2],-स्तथा वै मेरको[3] मधु.[4] ॥११३४॥

निशम्भो[5] बलि[6]-प्रह्लादौ[7], लङ्केशः रावणोऽष्टम ।
नवमस्तु जरासन्ध·[9], कथ्यते मगधेश्वर ॥११३५॥

शलाका पुरुषो शास्त्रे, सजिनेन्द्रास्त्रि षष्टिका· ।
तथैव मुत्सर्पिण्यां हि, नाम भिन्नैस्तु जानताम् ॥११३६॥

शास्त्रे हि भाषिता सर्वे, ख्याता लोकेऽपि सर्वदा ।

## ❀ आदिराजनामानि ❀

आदिराज·[1] पृथु[2] र्वैन्यो, मान्धाता[1] युवनाश्वज[2] ॥११३७॥

कुवलाश्वो[1], धुन्धुमारो[2], हरिश्चन्द्र[1] स्त्रिशङ्कुज.[2] ।
उर्वशीरमण[1] श्चैलो[2], बोध[3] पुरूरवा[4] स्तथा ॥११३८॥

सर्वदम[1] श्च सर्वद-मन[2] शकुन्तलात्मज[3] ।
दौष्यन्ति[4] र्भरत.[5] ख्यात, कार्त्तवीर्य[1] स्तु हैहय·[2] ॥११३९॥

अर्जुनो[3] दो सहस्रभृद्[4], कौशल्यानन्दन[1] स्तु वै ।
राम·[2] श्च रामचन्द्र[3] श्च रामभद्रो[4] ऽपि मन्यते ॥११४०॥

पुन र्दासरथि[5] प्रोक्त ख्यातो जगति सर्वदा ।

## ❀ सीतानामानि ❀

रामप्रिया हि नामास्ति, वैदेही[1] धरणीसुता[2] ॥११४१॥

मैथिली[3] जानकी[4] सीता[5], प्रख्याता पृथिवीतले ।

## ❀ कुशीलवनाम्नी ❀

रामसुतौ कुश[1]-लवा[2]-वेकयोक्त्या कुशीलवौ[3] ॥११४२॥

## ❀ लक्ष्मणनाम्नी ❀

सौमित्रि[1] र्लक्ष्मणो[2] नाम, कथ्यते र्लक्ष्मणस्य हि ।

❀ वालीनामानि ❀

वाली[१] वालि[२] श्च सुग्रीवा-ग्रज[३] श्चेन्द्रसुतो[४] भवेत् ॥११४३॥

❀ सुग्रीवनाम्नो ❀

सुग्रीव[१] स्तथाऽऽदित्य-सूनु[२] र्नाम निगद्यते ।

❀ हनुमाननामानि ❀

हनूमान्[१] हनुमान्[२] चैव, मारुति[३] र्वज्रकङ्कटः[४] ॥११४४॥

पुन स्यात् केशरीसुत[५], आञ्जनेयो[६] ऽर्जुनध्वज[७] ।

❀ रावणनामानि ❀

लङ्कापति[१] स्तु लङ्केश[२], पौलस्त्यो[३] दशकन्धर[४] ॥११४५॥

दशशिरा[५] दशास्य[६] श्च, दशकण्ठ[७] श्च रावण[८] ।

राक्षसेशो[९] रक्षईश[१०], श्चेति नामानि मन्यते ॥११४६॥

❀ इन्द्रजित्नामानि ❀

इन्द्रजित्[१] शक्रजित[२] चैव, मेघनाद[३] श्च रावणि[४] ।

मन्दोदरीसुत[५] प्रोक्त, नाम रावणनन्दन[६] ॥११४७॥

❀ युधिष्ठिरनामानि ❀

अजमीढ[१] स्तथाऽजात-शत्रु[२] र्युधिष्ठिर[३] पुनः ।

धर्मपुत्र[४] श्च शल्यारिः[५], कङ्क[६] श्च कथ्यते किल ॥११४८॥

## ❀ भीमसेननामानि ❀

भीम[1] श्च भीमसेन[2] श्च, बकनिषूदन[3] स्तथा ।
किर्मीरारि[4] श्च किर्मीर-निषूदनो[5] वृकोदर[6] ॥११४९॥

स्याद् हिडिम्बनिषूदनः[7], वै कीचकनिषूदनः[8] ।
मरुत्पुत्र[9] श्च नामानि, भीमस्य कथितानि वै ॥११५०॥

## ❀ अर्जुननामानि ❀

अर्जुन.[1] कर्णजित्[2] पार्थ[3], राधावेधो[4] धनञ्जय[5] ।
सव्यासाची[6] सुभद्रेश[7], किरीटी[8] च कपिध्वज[9] ॥११५१॥

ऐन्द्रि[10] र्धन्वी[11] नरो[12] योगी[13],
जिष्णु[14] चित्राङ्गसूदन[15] ।
बीभत्स[16] श्च बीभत्सुर्वै[17], गुडाकेशो[18] बृहन्नट[19] ॥११५२॥

विजय[20] श्चित्रयोधी[21] च, कृष्णपक्ष[22] श्च फाल्गुन[23] ।
श्वेतहय[24] श्च कर्णारि[25], श्चेति नामानि मन्यते ॥११५३॥

पुन स्तस्य रथो नन्दि-घोषनाम[1] निगद्यते ।
धनु स्तु गाण्डिव[1] चैव, गाण्डीव[2] मर्जुनस्य हि ॥११५४॥

ग्रथिक[1] सहदेव[2] श्च, नकुल[1] तन्तिपालक[2] ।
माद्रीपुत्रो च माद्रेयौ[1], कौन्तेया.[1] कुन्तिपुत्रका ॥११५५॥

## ❀ पाण्डवनामानि ❀

पाण्डवा[1] पाण्डवेया[2] श्च तथैव पाण्डवायना.[3] ।

❀ द्रौपदीनामानि ❀

सैरन्ध्री[1] द्रौपदी[2] कृष्णा[3], वेदिजा[4] नित्ययौवना[5] ॥११५६॥
याज्ञसेनी[6] च पाञ्चाली[7], नामानि सप्त सन्तिवै ।

❀ कर्णनामानि ❀

राधेय[1] श्चाङ्गराट्[2] चैव, कर्ण[3] श्चम्पाधिप[4] स्तथा ॥११५७॥
राधा[5]-सुता[6]-ऽर्कतनयः[7] कर्णनामानि सन्ति वै ।
पुन स्तस्य धनु र्नाम, कालपृष्ठ[1] हि मन्यते ॥११५८॥

❀ श्रेणिकनाम ❀

प्रख्यातः श्रेणिको[1] भूपो, भम्भासारो[2] ऽपि कथ्यते ।

❀ सालवाहननामानि ❀

स्यात् सालवाहनो[1] राजा, हाल[2] श्च सातवाहनः[3] ॥११५९॥

❀ कुमारपालनामानि ❀

कुमारपाल भूपाल[1], श्चौलुक्य[2] परमार्हतः[3] ।
राजर्षि[4] श्चापि धर्मात्मा[5], मारि[6]-व्यसनवारकौ[7] ॥११६०॥
तथा मृतस्वमोक्ता[8] वै, कथ्यते पण्डितै रिह ।

❀ राजवंश्यनाम ❀

राजबीजी[1] राजवंशी[2], राजवंश्योऽपि कथ्यते ॥११६१॥

❀ वंशजनामानि ❀

वंश्य[1] श्च वंशजो[2] बीज्य[3], श्चेति नामानि मन्यते ।

❀ राज्यस्य सप्ताङ्गनामानि ❀

स्वाम्य[1] ऽमात्य[2] स्तथा सुहृत्[3],

कोशो[4] राष्ट्रं[5] दुर्गो[6] बलम्[7] ॥११८२॥

एतानि सप्त नामानि, राज्याङ्गविनिरूपणे ।

प्रकृतय[1] स्तु प्रख्याता, पौराणां श्रेणयश्चता ॥११८३॥

तन्त्रं[1] वै निजराष्ट्रस्य, चिन्ता प्रोक्तं महीतले ।

आवाप[2] परराष्ट्रस्य, चिन्ता लोके हि कथ्यते ॥११८४॥

❀ परिवारनामानि ❀

परिवारः[1] परिस्यन्द[2], परिकर[3] परिच्छद[4] ।

तन्त्र[5] च परिबर्ह[6] श्च, परिजन[7] परिग्रह[8] ॥११८५॥

तथोपकरणं[9] परि-बर्हणं[10] परिबर्हणम्[11] ।

नामान्येतानि जानीयाद्, राजभृत्यस्य सर्वदा ॥११८६॥

❀ राजशय्यानामानि ❀

राजशय्या[1] महाशय्या[2], नृपशय्या[3] ऽपि मन्यते ।

### ❀ राजसिंहासननामानि ❀

सिंहासनं[1] सुवर्णस्य, रूपादे स्तु नृपासनम्[1] ॥११६७॥
भद्रासनं[2] पुनः प्रोक्तं, नृपयोग्यं हि भूतले।

### ❀ राजछत्रनामानि ❀

अयोष्णवारणं[1] नृप,-लक्ष्म[2] चाऽऽतपत्र[3] पुनः ॥११६८॥
आतपवारणं[4] छत्र[5], राजछत्र हि कथ्यते।

### ❀ चामरनामानि ❀

चमर[1] श्चामरं[2] रोम-गुच्छ[3] श्च वालव्यञ्जनम्[4] ॥११६९॥
प्रकीर्णक[5] श्च नामानि, मन्यते चामरस्य वै।

### ❀ स्थगीनाम ❀

स्थगी[1] ताम्बूलकरङ्क[2], स्ताम्बूलपात्रमुच्यते ॥११७०॥

### ❀ भृङ्गारनाम ❀

भृङ्गारः[1] कनकालुका[2], हेमकुम्भो हि कथ्यते।

### ❀ पूर्णकुम्भनाम ❀

पूर्णकुम्भो[1] भद्रकुम्भो[2], जलयुक्तो निगद्यते ॥११७१॥

### ❀ पादपीठनाम ❀

पदासनं[1] तथा पाद-पीठं[2] प्रोक्तं महीतले।

## ❀ मन्त्रिनामानि ❀

अमात्यः[1] सचिवो[2] बुद्धि,-सहाय[3] सामवायिक·[4] ॥११७२॥

प्रधानो[5] धीसखो[6] मन्त्री[7], नियोगी[1] व्यापृत[2] श्च स. ।
कर्मसहाय[3] आयुक्त[4], कमसचिव[5] उच्यते ॥११७३॥

## ❀ न्यायाधीशनामानि ❀

न्यायद्रष्टा[1] तथा प्राड्विवाको[2] ऽक्षदर्शक[3] पुन ।
स्थेय[4] श्चैतानि नामानि, न्यायाधीशस्य सन्तिवै ॥११७४॥

## ❀ मुख्यप्रधाननामानि ❀

महामात्र[1] प्रधान[2] श्च, मुख्यमन्त्री हि मन्यते ।

## ❀ पुरोहितनामानि ❀

पुरोहित[1] पुरोधा[2] श्च, सौवस्तिको[3] ऽपि कथ्यते ॥११७५॥

## ❀ द्वारपालकनामानि ❀

उत्सारक[1] प्रतीहारो[2], द्वारस्थो[3] द्वारपालक[4] ।
द्वा स्थितिदर्शको[5] दण्डी[6],
द्वा स्थ[7] श्च द्वा·स्थित[8] स्तथा ॥११७६॥

क्षत्ता[9] वेत्रधरो[10] वेत्री[11], प्रोक्तो दौवारिक[12] पुन ।

## ❀ रक्षिवर्गनाम ❀

रक्षिवर्ग[1] ऽनिकस्थ[2] श्च, कथ्यते ह्याङ्गरक्षक ॥११७७॥

## ❀ अधिकृतनामानि ❀

अधिकृत[1] स्तथाऽध्यक्ष[2], श्चाधिकारी हि कथ्यते ।

## ❀ पाचकनामानि ❀

पौरोगव [1] सूदाध्यक्षो[2], वरिष्ठः पाचको जन ॥११७८॥

औदनिको[1] गुण [2] सूपः[3], सूपकार[4] श्च वल्लव [5] ।

सूद[6] आरालिक[7] श्चैव, भक्तकार[8] श्च कथ्यते ॥११७९॥

## ❀ कनकाध्यक्षनामानि ❀

भैरकः[1] कनकाध्यक्षो[2], हेमाध्यक्ष[3] श्च हैरिक [4] ।

## ❀ रूपाध्यक्षनामानि ❀

रूप्याध्यक्ष[1] स्तुस एव टङ्कपति[2] हि नैष्किक ॥११८०॥

## ❀ स्थानाध्यक्षनाम ❀

कथ्यते स्थानिकः[1] स्थाना-ध्यक्ष[2] श्च साक्षरैः किल ।

## ❀ शुल्काध्यक्षनाम ❀

शुल्काध्यक्ष[1] श्च शौल्किक.[2], कथ्यते विबुधै रिह ॥११८१॥

### ❀ शुल्कनाम ❀

शुल्कं[1] घट्टादिदेयं स्व, ख्यात विश्वे हि सर्वदा ।

### ❀ धर्माध्यक्षनामानि ❀

धर्माधिकरणी[1] स्याद् वै, धर्माध्यक्ष[2] श्च धार्मिक[3] ॥११८२॥

### ❀ हट्टाध्यक्षनाम ❀

अथा ऽधिकर्मिको[1] हट्टा-ध्यक्ष[2] श्च कथ्यते पुनः ।

### ❀ दण्डनायकनामानि ❀

चतुरङ्गबलाध्यक्ष[1], सेनानी[2] र्दण्डनायक ॥११८३॥

ग्रामेषु भूरिषु गोपौ[1], कथ्यते जगती जनै ।
स्थायुको[1] ऽधिकृतो ग्रामे, मन्यते ऽपि महीतले ॥११८४॥

### ❀ अन्तःपुराध्यक्षनामानि ❀

अथ चाऽन्त· पुराध्यक्षो[1], ऽन्तर्वंशिका[2]-ऽऽन्तर्वंशिको[3] ।
तथाऽन्तर्वेशिमक[4] आन्त-र्वेश्मिकः[5] आवरोधिक[6] ॥११८५॥

आन्तःपुरिक[7]-शुद्धान्ता-ध्यक्ष[8] स्तथा ऽवरोधिक[9] ।
अन्त पुराध्यक्षस्यात्र, नामानि नव मन्यते ॥११८६॥

### ❀ पारिकर्मिकनाम ❀

पति स्तूपकरणाना, कथ्यते पारिकर्मिक.[1] ।

## ❀ पुराध्यक्षनामानि ❀

कोट्टपतिः[1] पुराध्यक्षः[2], पौरिको[3] दाण्डपाशिक[4] ॥११८७॥

## ❀ अन्तःपुरनामानि ❀

शुद्धान्तो[1] ऽन्त पुरं प्रोक्त, मवरोधो[3] ऽवरोधनम् ।

## ❀ अन्त पुररक्षकनामानि ❀

सौविदा[1] सौविदल्लाः[2] स्यात्,
स्थापत्या[3] श्च कञ्चुकिन[4] ॥११८८॥

षण्ढो[1] वर्षवरः[2] प्रोक्त, क्लीबे ऽन्त पुररक्षकः ।

## ❀ शत्रुनामानि ❀

शत्रु[1] श्च शात्रवो[2] ऽमित्र[3], प्रत्यनीकः[4] पर[5] स्तथा ॥११८९॥

विपक्ष[6] प्रत्यवस्थाता[7], सपत्न[8] परिपन्थक[9] ।
प्रत्यर्थी[10] परिपन्थो[11] च, प्रतिपक्षः[12] रिपुः[13] पुन ॥११९०॥

असहनो[14] ऽसुहृद्[15] दुर्हृद्[16],
द्वेषी[17] दस्यु[18] स्तथा द्विषन्[19] ।

अरातिः[20] अभिमाति[21] श्चा,-
ऽभियाति[22] द्विट्[23] तथाऽहित.[24] ॥११९१॥

अरि[25] वैरी[26] जिघांसु[27] श्च, रिपो र्नामानि मन्यते ।

## ❀ वैरनामानि ❀

विरोध[1] श्चापि विद्वेषो[2], वैर[3] चेति निगद्यते ॥११६२॥

## ❀ मित्रनामानि ❀

मित्र[1] सखा[2] सहाय[3] श्च, वयस्य[4] सवया[5] स्तथा ।
सुहृत्[6] साप्तपदीन[7] श्च, स्निग्धः[8] सहचरो[9] भवेत् ॥११६३॥

## ❀ मैत्रीनामानि ❀

सौहार्दं[1] सौहृद[2] सख्य[3], मजर्य[4]-सङ्गतं[5] तथा ।
मैत्री[6] साप्तपदीनं[7] च, मित्रता नाम कथ्यते ॥११६४॥

## ❀ सभाजननामानि ❀

आनन्दन[1] सभाजन[2], माप्रच्छन[3] स्वभाजनम्[4] ।
विषयानन्तरो भूपः, शत्रु[1] रित्युच्यते सदा ॥११६५॥

अत परं मित्र[1] मूदा-सीनः[1] परतर पुन. ।
पृष्ठतः प्राष्णिग्राहो[1] ऽस्ति, भिन्नभिन्नार्थवाचक. ॥११६६॥

अनुरोधो[1] ऽनुवृत्ति[2] श्च, यथेच्छावर्तन भवेत् ।

## ❀ चरनामानि ❀

चर[1] श्चारो[2] ऽवसर्प[3] श्च, मन्त्रविद्[4] गूढपूरुष[5] ॥११६७॥

स्पशो[6] यथार्हवर्ण[7] श्च, वार्त्तायन[8] श्च हेरिक[9] ।
प्रणिधि[10] श्चेति नामानि, कथयन्ति चरस्य वै ॥११६८॥

आप्त[1]-प्रत्ययितौ[2] तुल्या-वविसंवादिवाक्[3] तथा ।
गृहपति[1] स्तु सत्रिणी[2], नाम व कथ्यते बुधैः ॥११९९॥

सन्देशहारको[1] दूत[2], ख्यात सन्धि स्तु विग्रह[1] ।
यान[1] तथाऽऽसनं[1] द्वैध[1]-माऽऽश्रय[1] श्चेति षड्गुणा· ॥१२००॥

उक्ताहि शक्तय स्तिस्र, प्रभुत्वो[1]-त्साह[2]-मन्त्रजाः[3] ।
साम[1] दाम[2] भेद[3]-दण्डा[4], उपाया शासने स्थिता ॥१२०१॥

प्रियभाषादयो यत्र, प्रोक्तं तत् साम[1] सान्त्वनम्[2] ।
उपजाप[1] स्तु भेद·[2] स्याद्, दण्ड[1] स्तु साहसं[2] दम[3] ॥१२०२॥

## ❋ दाननामानि ❋

उपहार[1] उपग्राह्य[2], उपचार[3] उपायनम्[4] ।
उत्कोच[5] उपदा[6] लञ्चा[7], प्राभृत[8] ढौकन[9] पुन ॥१२०३॥

उपप्रदान[10]–माऽऽमिष[11], कौशलिक[12] तथैवच ।
एतानि दाननामानि, वदन्ति विबुधा जना ॥१२०४॥

## ❋ मायानामानि ❋

इन्द्रजाल[1]-मुपेक्षा[2] च, माया[3] ऽपि कथ्यते पुनः ।
क्षुद्रोपाया त्रयश्चैते, प्रख्याता पृथिवीतले ॥१२०५॥

## ❋ मृगयानामानि ❋

मृगया[1] ऽक्षा[2] स्त्रिय[3] पान[4], वाक्पारुष्या[5]-ऽर्थदूषणे[6] ।
दण्डपारुस्य[7] चेत्येतद्, धेय व्यसनसप्तकम् ॥१२०६॥

आदान[1] सर्वतो लोकाद्, अदान[2] च निषेधकम् ।
परित्यागो[3] विनाश[4] श्च, चतुर्विधार्थदूषणम् ॥१२०७॥

❀ पराक्रमनामानि ❀

शौण्डीर्य[1] पौरुष[2] शौर्य[3], विक्रम[4] श्च पराक्रमः[5] ।

❀ प्रतापनाम ❀

यत् कोशदण्डज तेज, स प्रभावः[1] प्रतापवान्[2] ॥१२०८॥

धर्मादर्था च्च कामा च्च, भित्यादे श्च पुन खलु ।
अमात्यादेः परीक्षा या, सोपधा[1] कथ्यते बुधै ॥१२०९॥
मन्यते ऽषडक्षीणं[1] वै, मन्त्रण रहसि द्वयो. ।

❀ मन्त्रनाम ❀

लोके हि कथ्यते मन्त्रो[1], रहस्यालोचनं किल ॥१२१०॥

❀ एकान्तनामानि ❀

एकान्त[1] केवल[2] छन्नं[3], विविक्त[4] विजन[5] तथा ।
उपह्वर[6] रह[7] श्चैव, निशलाक[8] निगद्यते ॥१२११॥

❀ गुह्यनाम ❀

रहस्य[1] चापि गुह्यं[2] वै, गुप्तयोग्यं हि मन्यते ।

❀ न्यायनामानि ❀

नीति[1] र्न्यायो[2] नय[3] कल्पो[4], देशरूप[5] समञ्जसन्[6] ॥१२१२॥
अभ्रेष[7] श्चेति नामानि, प्रथितानि महीतले।

❀ न्याय्यनामानि ❀

उचित[1] चाभिनीतं[2] च, युक्तं[3] प्राप्तं[4] च साम्प्रतम्[5] ॥१२१३॥
न्याय्य[6]-मौपयिक[7] लभ्यं[8], भजमान[9] मपि मन्यते।

❀ अधिकारनाम ❀

अधिकार[1] प्रक्रिया[2] च, व्यवस्था कार्य सुच्यते ॥१२१४॥

❀ मर्यादानामानि ❀

मर्यादा[1] धारणा[2] संस्था[3], स्थिति स्यान्न्यायसस्थिति।

❀ अपराधनामानि ❀

व्यलीकं[1] विप्रिय[2] मन्तुः[3], आगा[4] ऽपराध[5] उच्यते ॥१२१५॥

❀ करनामानि ❀

करो[1] बलि[2] र्भागधेयो[3], द्विपाद्यो[1] द्विगुणो दमः।

❀ सेनानामानि ❀

अनीकं[1] कटकं[2] तन्त्र[3], सेना[4] सैन्यं[5]-मनीकिनी[6] ॥१२१६॥

वरूथिनी[7] चमू[8] श्चक्र[9], पृतना[10] च पताकिनी[11] ।
शिबिरो[12] ध्वजिनी[13] दण्ड[14],
स्कन्धावार[15] श्च वाहिनी[16] ॥१२१७॥

बल[17] श्चैतानि नामानि, विजानन्ति मनीषिण ।

❀ शिबिरनाम ❀

विश्वे सैन्यस्थिति. प्रोक्ता, प्रख्यातं शिबिर[1] चतत् ॥१२१८॥

❀ व्यूहनाम ❀

दण्डादिको युधि व्यूह:[1], सेनाया रचनासु वै ।
प्रत्यासारो[1] व्यूहपार्ष्णि[2], व्यूह पश्चात् स्थल भवेत् ॥१२१९॥

सैन्यस्य पृष्ठभाग स्याद्, सैन्यपृष्ठ[1] प्रतिग्रह: ।
एकेभैकरथास्त्र्यश्वा, पत्ति[1] पञ्चपदातिका ॥१२२०॥

सेना[2] सेनामुखं[3] गुल्मो[4], वाहिनो[5] पृतना[6] चमू[7] ।
अनीकिनी[8] च पत्तेः स्याद्, कराद्यै स्त्रिगुणै क्रमात् । १२२१॥

तास्तु दशानीकिन्यो वै, कथ्यते ऽक्षौहिणी[1] किल ।
सैन्यस्य रक्षणं प्रोक्तं, सज्जनं[1] चोपरक्षणम्[2] ॥१२२२॥

❀ पत्त्यादिक सैन्यसख्यायाः कोष्टकम् ❀

| नाम | हस्तिसख्या | रथसख्या | अश्वसख्या | पदातिसख्या |
|---|---|---|---|---|
| पत्तिः | १ | १ | ३ | ५ |
| सेना | ३ | ३ | ९ | १५ |

| नाम | हस्तिसख्या | रथसख्या | अश्वसक्या | पदातिसख्या |
|---|---|---|---|---|
| सेनामुखम् | ९ | ९ | २७ | ४५ |
| गुल्म | २७ | २७ | ८१ | १३५ |
| वाहिनी | ८१ | ८१ | २४३ | ४०५ |
| पृतना | २४३ | २४३ | ७२९ | १२१५ |
| चमू | ७२९ | ७२९ | २१८७ | ३६४५ |
| अनीकिनी | २१८७ | २१८७ | ६५६१ | १०९३५ |
| अक्षौहिणी | २१८७० | २१८७० | ६५६१० | १०९३५० |

## ❀ पताकानामानि ❀

पताका[1] केतनं[2] केतु[3], पटाका[4] च ध्वजः[5] पुनः।
वैजयन्ती[6] जयन्ती[7] च. ध्वजनामानि सन्ति वै ॥१२२३॥

क्वचित् पताका दण्डोऽपि, पताका कथ्यते पुन ।
ध्वजोर्ध्वभाग उच्चूलो[1], ऽवचूलो[1] ऽस्याध उच्यते ॥१२२४॥

पत्ती[1] रथो[2] गजो[3] वाजी[4], स्यात् सेनाङ्गं चतुर्विधम् ।

## ❀ रथनामानि ❀

युद्धार्थे चक्रवद्याने, शताङ्ग[1] स्यन्दन[2] स्तथा।
रथ[3] श्चाथ पुष्परथ, क्रीडार्थो यश्च क्रियते ॥१२२५॥

मरुद्रथो[1] ऽपि देवार्थ., प्रोक्तो योग्यारथः[1] पुनः।
स च शास्त्राध्ययनार्थो, वैनयिको[2] ऽपि कथ्यते ॥१२२६॥

अध्वरथ[1] श्च पारिया-निक[2] पान्थार्थ उच्यते।
पुन प्रवहण[1] कर्णी-रथ[2] श्च रथगर्भकः[3] ॥१२२७॥

डयन[४] ञ्चेति नामास्ति, स्कन्धे धार्यते नरैः ।
अथान[१] शकटो[२] नाम शकटं चापि कथ्यते ॥१२२८॥

यानं वृषभसंयुक्तं, गन्त्री[१] कम्बलिवाह्यकम्[२] ।
काम्बलाच्छादितो रथ, काम्बल.[१] कथ्यते पुनः ॥१२२९॥

वस्त्रादाच्छादितो वास्त्रो[१], दौगूलोऽपि निगद्यते ।
य पाण्डुकम्बली[१] स स्यात्, सवीत पाण्डुकम्बलैः ॥१२३०॥

द्वैपो[१] रथ स्तु वैयाघ्रो[२], यो वृतो द्वीपिचर्मणा ।

❀ चक्रनामानि ❀

अरि[१] चक्रं[२] रथाङ्गं[३] च, रथपादो[४]ऽपि कथ्यते ॥१२३१॥

भ्रमद् भागस्तु चक्रस्य, नेमि[१] र्धारा[२] तथा प्रधि.[३] ।
अक्षाग्रकीले त्वण्या[१]-ऽऽणी[२],
प्रोक्तौ नाभि[१] स्तु पिण्डिका[२] ॥१२३२॥

स चक्रमध्यभागोऽस्ति कूबर[१] वै युगन्धरम् ।
उक्तं युगस्य काष्ठं तद्, युग[१]-मीशान्तबन्धनम्[२] ॥१२३३॥

युगकीलक[१]-शम्येऽथ भवेद्युगस्य कीलक ।
युगान्तर[१] तु प्रासङ्गो[२], धुरो भागो निगद्यते ॥१२३४॥

अध स्थित तु यद् काष्ठ-मनुकर्षो[१] निगद्यते ।
यानमुख[१] च धूर्वी[२] धूः, रथाग्रभाग उच्यते ॥१२३५॥

वरूथो[1] रथगुप्ति[2] स्याद्, लोहावृत्तं रथोपरि ।
अपस्करा[1] रथाङ्गानि[2], नामानि विदितानि वै ॥१२३६॥

❀ शिबिकानामानि ❀

झम्पानं[1] याप्ययान[2] स्याद्, झम्फानं[3] शिबिका[4] पुन. ।

❀ दोलानामानि ❀

दोला[1] हिण्डोलक[2] प्रेङ्खा[3], कथ्यते च शयानक.[4]॥१२३७॥
वैनीतिक[1] परम्परा वाहन शिबिकादिकम् ।

❀ वाहननामानि ❀

यानं[1] युग्यं[2] तथा पत्रं[3], वाह्य[4] वह्य[5] च वाहनम्[6] ॥१२३८॥
धोरणं[7] चेति नामानि, यानस्य विदितानि वै ।

❀ सारथिनामानि ❀

सव्येष्ठा[1] सारथि[2] सादी[3], क्षत्ता[4] रथकुटुम्बिक.[5] ॥१२३९॥
सव्येष्ठो[6] दक्षिणस्थ[7] श्च, प्रवेता[8] प्राजिता[9] तथा ।
यन्ता[10] सूतो[11] नियन्ता[12] च, नामानि प्रथितानि वै ॥१२४०॥

❀ रथरोहिनामानि ❀

रथरोही[1] रथारोही[2], रथी[3] योद्धा रथस्थितः ।

❀ रथिकनामानि ❀

पुनश्च रथवान् प्रोक्तो, रथिको[1] रथिरो[2] रथी[3] ॥१२४१॥

❀ अश्वारोहनामानि ❀

अश्वारोहो[1] ऽश्ववारः[2] स्यात् सादी[3] च तुरगी[4] पुनः ।

❀ हस्त्यारोहनामानि ❀

हस्त्यारोहो[1] महामात्रः[2], सादी[3] यन्ता[4] तथैव च ॥१२४२॥

निषादी[5] चेति नामानि, कथ्यन्ते च निषादिनः ।

❀ हस्तिपकनामानि ❀

आधोरणा[1] गजाजीवा[2], हस्तिपके[3]-भयालकाः[4] ॥१२४३॥

मण्ठो[5] मण्ठ[6] श्च नामानि, कथयन्ति मनीषिणः ।

❀ भटनामानि ❀

भटा[1] योधा[2] च योद्धार[3], सेनारक्षा[1] तु सैनिकाः[2] ॥१२४४॥

प्राहरिका[3] श्च नामानि, प्रहरिणा भवन्ति च ।

सेनासु नियुक्तजना, सैन्या[1] स्यु सैनिका[2] स्तथा ॥१२४५॥

❀ सेनाभेदा ❀

सहस्रिण[1] श्च साहस्रा[2], सहस्रस्य निरीक्षका ।

छायाकर[1] श्छत्रधार.[2], छत्रधारी पुमान् भवेत् ॥१२४६॥

पताकी[1] वैजयन्तिक[2], सचिह्न छत्रधारक. ।
परिचर:[1] परिधिस्थः[2], सेनासरक्षको भवेत् ॥१२४७॥

आमुक्तः[1] परिमुक्त[2] श्च, पिनद्धो[3] ऽपिनद्ध[4] इति ।
भवेत् कञ्चुकधारी य., संभवेत् सैनिको जनः ॥१२४८॥

सन्नद्धो[1] वर्म्मिन[2] सज्जः[3], दंशितो[4] व्यूढकङ्कट[5] ।
पुन. कवचितो[6] भेदो, युद्धाय गन्तुमुत्सुके ॥१२४९॥

❀ कवचनामानि ❀

सन्नाह[1] कङ्कटो[2] वर्म[3], तनुत्रं[4] कवच[5] तथा ।
दश[6] श्च दंशन[7] त्वक्र[8], तनुत्राण[9]-मुरश्छद[10] ॥१२५०॥

माठि[11] श्च जगरो[12] माठो[13], नामानि कवचस्य वै ।
कूर्पासः[1] कञ्चुक[2] श्चापि, वारबाणो[3] निचोलक[4] ॥१२५१॥

भवेदाघातसन्त्राणे, लौह निर्मित वस्तुनि ।
सारसन[1]-मधिकाङ्ग[2], ऽधियाङ्ग[3] धियाङ्ग[4]-मिति ॥१२५२॥

कञ्चुकोपरि येनाऽसौ, बध्नाति तत्र कथ्यते ।
शिरस्त्राणं[1] शिरस्क[2] ञ्च, शीर्षक[3] खोल[4] मित्यपि ॥१२५३॥

शीर्षण्यं चेति वै प्रोक्तं, शिरस्त्रे लौह निर्मिते ।
नागोद[1]-मुदरत्राणं[2], येनोदरस्य रक्षणम् ॥१२५४॥

जङ्घात्राणं[1] च मत्कुणं[2], जङ्घयो रक्षणं स्मृतम् ।
हस्तत्राणं करे ख्यातं, बाहुत्राणं[1] च बाहुलम्[2] ॥१२५५॥

आयसी[1] जालप्राया[2] स्याद्, जालिका[3] चाऽङ्गरक्षणी[4] ।
आख्यातं विविधं नाम, विभिन्नाङ्गस्य रक्षणे ॥१२५६॥

❀ शस्त्रजीविनामानि ❀

आयुधिका[1]-ऽऽयुधीयौ[2] च, काण्डपृष्ठ[3] स्तथैव च ।
शस्त्रजीवी[4] च नामास्ति, शस्त्रद्वाराय जीवति ॥१२५७॥

❀ कौन्तिकनाम ❀

कौन्तिक[1] प्रासिक[2] श्चैव, कुन्तावान् कथ्यते भुवि ।

❀ पारश्वधनामानि ❀

परश्वधायुध[1] श्चैव, पारश्वध[2] स्तथा किल ॥१२५८॥

पारश्वधिक[3] आख्यात, परशुवान् निगद्यते ।

❀ नैस्त्रिंशिकनाम ❀

नैस्त्रिंशिको[1] ऽपि खड्गवान्, शाक्तिकः[1] शक्तिशस्त्रवान् ॥१२५९॥

❀ याष्टीकनाम ❀

याष्टीको[1] यष्टिवान् लोके, कथ्यते हि मनीषिणा ।

❀ धनुर्धरनामानि ❀

धनुर्धर[1] श्च धानुष्को[2], धनुष्मान्[3] पुनरुच्यते ॥१२६० ।

तूणी[४] धन्वी[५] धनुर्भृ[६] च्च, निषङ्गी[७] मन्यते पुन: ।

❀ काण्डीरनाम ❀

काण्डीरः[१] काण्डवान्[२] चापि, काण्डधारी हि कथ्यते ॥१२६१॥

❀ कृतहस्तनामानि ❀

कृतपुङ्खः[१] कृतहस्त.[२], सुप्रयुक्तशरो[३] जनः ।

समवेद्य श्च जानाति सम्यग्वाण प्रक्षेपणम् ॥१२६२॥

❀ लघुहस्तनाम ❀

लघुहस्तः[१] शीघ्रवेधी[२], लक्ष्यं विध्यति शीघ्रतः ।

❀ भ्रष्टबाणनाम ❀

भ्रष्टबाणो[१] ऽपराद्धेषु[२], यो लक्ष्यं नैव साधयेत् ॥१२६३॥

❀ दूरवेधीनाम ❀

दूरवेधी[१] दूरापाती[२], दूराल्लक्ष्यं यो विध्यति ।

❀ शस्त्रनामानि ❀

आयुधं[१] हेति[२] रस्त्र[३] ञ्च, शस्त्रं[४] प्रहरणं[५] पुनः ॥१२६४॥

पाणिमुक्तं[१] च शक्तिः स्यात्, यन्त्रमुक्तं[२] शरादिकम् ।

अमुक्तं[३] शस्त्रिका प्रोक्ता, मुक्तामुक्तं[४] यष्टि रिति ॥१२६५॥

## ❀ धनुर्नामानि ❀

धनु[1] धनु[2] र्धनू[3] र्धन्व[4], कोदण्ड[5] कार्मुकं[6] द्रुणम्[7] ।
इष्वासो[8] ऽस्त्र[9] तथाऽऽस[10] श्च,
चाप[11] स्याच्च शरासनम्[12] ॥१२६६॥

लस्तक[1] स्तु धनुर्मध्य-भागो हस्तेन गृह्यते ।
अटनि[1] रटनी[2] चैव, मत्तिः स्याद् धनु रग्रभाक् ॥१२६७॥

## ❀ द्रुणानामानि ❀

गुणो[1] गव्या[2] द्रुणा[3] मौर्वी[4],
जीवा[5] शिञ्जा[6] च शिञ्जिनी[7] ।
ज्या[8] च वाणासन[9] चेति, जीवारज्जु र्निगद्यते ॥१२६८॥

## ❀ गोधानामानि ❀

ज्याघातवारण[1] चैव, गोधा[2] तल[3] तथा तला[4] ।
एतस्य कथ्यते लोके, चर्मणो बाहुबन्धन ॥१२६९॥

स्थानान्यालीढ[1]-वैशाखे[2], प्रत्यालीढं[3] च मण्डलम्[4] ।
समपाद[5] श्च विज्ञेया, धनु क्षेपण संस्थिति ॥१२७०॥

## ❀ लक्ष्यनाम ❀

लक्षं[1] लक्ष्य[2] निमित्त[3] ञ्च, वेध्यं[4] स्याच्च शरव्यकम्[5] ।

## ❀ बाणनामानि ❀

बाण[१] काण्ड:[२] कलम्ब[३] श्च,
कादम्ब[४] श्चोऽस्त्रकण्टक.[५] ॥१२७१॥

कङ्कपत्र:[६] पृषत्क[७] श्च, वीरशङ्कु[८] श्च सायकः[९] ।
आशुगो[१०] ऽजिह्मगो[११] रोपो[१२],
गार्ध्रपक्ष[१३] शर:[१४] खग[१५] ॥१२७२॥

लक्षहा[१६] मार्गणो[१७] वारो[१८],
विशिख[१९] श्च शिलीमुख[२०] ।
चित्रपुङ्ख[२१] श्च पत्री[२२]-षु:[२३],
प्रदरो[२४] मर्मभेदनः[२५] ॥१२७३॥

पत्रवाह[२६] श्च नामानि, कथ्यन्ते विबुधै रिषो. ।

## ❀ बाणविशेषनामानि ❀

एषण.[१] सर्वलोह[२] श्च, लोहनालो[३] ऽस्त्रसायक:[४] ॥१२७४॥

प्रक्ष्वेडन[५] श्च नाराचो[६], लोहबाणाभिधानि च ।
निरस्त:[१] प्रहित·[२] क्षिप्त[३], क्षिप्तबाणो हि कथ्यते ॥१२७५॥

विषाक्तो[१] लिप्तको[२] दिग्ध[३], श्चोक्तं वै विषवान् शर ।
बाणमुक्ति[१] र्व्यवच्छेद[२], धनुसङ्गात् प्रयाति यत् ॥१२७६॥

तीव्रता बाणवेगस्य, कथ्यते दीप्तिनामत[१] ।
धारवान् लोहबाणस्तु, क्षुरप्रो[१] विनिगद्यते ॥१२७७॥

तद्बलो[1] मूषकपुच्छ-समानो बाण उच्यते ।
अर्द्धेन्दु[1] र्वै स लोहेषु-रर्धचन्द्रेण यः समः ॥१२७८॥

त्रिशरश्चैकलोहश्च, तीरीबाणो[1] निगद्यते ।
दण्डासनो[1] उर्द्धनाराचो[2], तोमरो[3] गरुड[4] स्तथा ॥१२७९॥

वावल्ल[5] श्चापि भल्ल[6] श्च, भेदा ज्ञेया शरस्य वै ।
पक्ष[1] श्च पत्रपाली[2] स्याद्, वाज[3] श्छदावलि[4] स्तथा ॥१२८०॥

बाणस्कन्धे पक्षन्यास, पत्रणा[1] कथ्यते ऽत्र वै ।
कत्तरी[1] कर्त्तरि[2] पुङ्ख[3], बाणमूले प्रयुज्यते ॥१२८१॥

## ❀ तूणनामानि ❀

तूणीरो[1] बाणधि[2] स्तूण[3], शरधि[4] श्च शराश्रय[5] ।
उपासङ्गो[6] निषङ्ग[7] श्च, कलाप[8] श्चेषुधि[9] रपि ॥१२८२॥

## ❀ कृपाणनामानि ❀

करपालः[1] कृपाण[2] श्च करवाल[3] करालिकः[4] ।
तीक्ष्णधार[5] श्च धाराङ्गो[6], धाराधरो[7] दुरासद[8] ॥१२८३॥

श्रीगर्भ[9] स्तीक्ष्णकर्मा[10] च, शस्त्र[11] कौक्षेयको[12] ऽक्षर[13] ।
व्यवहार[14] श्च देवो[15] ऽसि[16],
विजय[17] श्च विषाग्रज[18] ॥१२८४॥

मण्डलाग्रो[19] मनुज्येष्ठो[20], धर्मपाल[21] प्रजाकर[22] ।

निस्त्रिंश[२३] श्चन्द्रहासो[२४] ऽपि,
चन्द्रभास[२५] श्च सायकः[२६] ॥१२८५॥

ऋष्टि[२७] रिष्टि[२८] स्तथा रुद्र-तनय[२९] स्तरवारि[३०] हि ।
खड्गो[३१] धर्मप्रचार[३२] श्च,
प्रसङ्गो[३३] ऽपि शिवङ्कर[३४] ॥१२८६॥

शाता[३५] विशसन[३६] श्चेति, नामानि विलसन्त्यसे. ।
खड्गमुष्टि स्त्सरु[१] ख्यातः, कोश[१] स्तु खण्डधारकः ॥१२८७॥

परिवार.[२] परीवारः[३], प्रत्याकार[४] स्तथैव च ।
खड्गपिधानकं[५] खड्ग-पिधान[६] मपि मन्यते ॥१२८८॥

❀ फलकनामानि ❀

आवरण खेटकं[२] खेट[३] फलक[४] मङ्कुनं[५] स्फुरः[६] ।
स्फुरक[७] फरकं[८] चर्म[९], नामानि फलकस्य वै ॥१२८९॥

❀ सङ्ग्राहनाम ❀

चर्ममुष्टौ हि सङ्ग्राहः[१], व्यवहारे तु कथ्यते ।

❀ छुरीनामानि ❀

असी[१] शस्री[२] क्षुरी[३] पत्रं[४], क्षुरिका[५] छुरिका[६] छुरी[७] ॥१२९०॥

धेनुका[८] चाऽसिधेनु[९] श्चा,-ऽसिपुत्री[१०] कोशशायिका[११] ।
कृपाणिका[१२] कृपाणी[१३] च, कथ्यन्ते नाम संग्रहे ॥१२९१॥

पत्रफला[1] पत्रपाल[2], कुट्टन्ती[3] हुलमातृका[4] ।
लम्बाया श्छुरिकाया हि, विजानन्ति मनीषिण ॥१२६२॥

※ यष्टिनामानि ※

दण्ड[1] स्तथापि यष्टि[2] श्च लगुड.[3] कथ्यते पुन ।

※ ईलोनामानि ※

ईलि[1] रीलो[2] तथा तर-वालिका[3] करवालिका[4] ॥१२६३॥

※ सृगनाम ※

सृग[1] श्च भिन्दिपालो[2] ऽपि, करक्षेप्यम थोच्यते ।

※ कुन्तनाम ※

कुन्त.[1] प्रास[2] श्च नामास्ति, प्रख्यात शस्त्रमत्र वै ॥१२६४॥

※ घननामानि ※

द्रुघणो[1] मुद्गर[2] श्चैव, घनो[3] ऽपि मन्यते पुनः ।

※ पर्शुनामानि ※

पर्श्वध.[1] परशु[2] पर्शु[3], स्वधिति[4] श्च परश्वध[5] ॥१२६५॥
कुठार[1] श्च कुठारस्य, नामानि सन्ति पट् पुन ।

※ परिघनामानि ※

परिघ.[1] पलिघ[2] श्चैव, परिघातन[3] उच्यते ॥१२६६॥

लौहबद्ध काष्ठदण्डे, नामत्रयं प्रकीर्तितम् ।

### ❀ सर्वलानाम ❀

दधिमन्थकवद् बाण, स तोमर[१] श्च सर्वला[२] ॥१२९७॥

### ❀ शल्यनाम ❀

किल बाणाग्रभागो वै, शङ्कु[१] शल्य[२] च कथ्यते ।

### ❀ शूलनाम ❀

त्रिशीर्षक[१] तथा शूल[२], त्रिशूल मन्यते जनै ॥१२९८॥

### ❀ चक्रनामानि ❀

शक्ति[१] श्चक्रं[२] च दु:स्फोट[३], पट्टिश[४] पट्टिस:[५] पुन ।
दुस्फोट[६] श्चेति नामास्ति, शतघ्नी[१] तु महाशिला[२] ॥१२९९॥

मुषुण्ढी[१] र्चिरिका[२] चैव, वराहकर्णक[३] पुन ।
विभिन्नास्त्रस्य नामेदं, विभिन्न ज्ञायता मिह ॥१३००॥

कासू[१] महाफला[२] चैव, मण्टताला ऽऽयता[३] पुन ।
शक्ति शस्त्रस्य नामानि, मन्यन्ते सुधिया सदा ॥१३०१॥

पट्टिसो[१] लोहदण्ड[२] श्च, तीक्ष्णधार.[३] खुरोपम[४] ।
स्याच्छस्त्रं ह्यस्त्रवल्लोके, ऽऽराफलो[१] ऽराफल[२] स्तथा ॥१३०२॥

दुःस्फोट[३] श्चेति दु स्फोट-नाम शस्त्रं हि कथ्यते ।
चक्रं[१] वलयप्राय[२] चा,-ऽरसञ्चित[३] मिह पुनः ॥१३०३॥

शतघ्नी[1] च चतुस्ताला[2], लोहकण्टकसञ्चिता[3] ।
अय·कण्टकसंछन्ना[1], महाशिला[2] च कथ्यते ॥१३०४॥

कणयो[1] लोहमात्र[2] श्च, कथ्यते लोहशस्त्रकम् ।
हुलाग्रका[1] नामशस्त्र, चिरिका नामवद् भवेत् ॥१३०५॥

वराहकर्णको[1] नाम, शस्त्रसज्ञा विशेषत ।
प्रोक्तं वै मुनिना[1] चैतद् हुल[2] तथा ऽस्त्रशेखरम्[3] ॥१३०६॥

❀ शस्त्रकलाभ्यासनामानि ❀

उपासनं[1] शराभ्यासो[2], योग्या[3] च खुरली[4] श्रम[5] ।
प्रोक्त शस्त्रकलाभ्यासो, ऽभ्यासो[6] ऽपि पुनरुच्यते ॥१३०७॥

❀ शस्त्राभ्यासस्थलनामानि ❀

शस्त्राभ्यासस्थलं तद्भूः[1], स्यात् खलूरः[2] खलूरिका ।

❀ सर्वौघनामानि ❀

सर्वाभिसार·[1] सर्वौघ.[2], सर्वसंनहन[3] पुन ॥१३०८॥
युद्धार्थं किल सेनाया , प्रयाणे कथ्यते भुवि ।

❀ लोहाभिसारनामानि ❀

लोहाभिसार[1] श्च नीरा,-जन[2] निराजनाविधि[3] ॥१३०९॥
एतत् कथ्यते वशम्या, विधि र्नीराजनात् पर ।

युद्धयात्रा पूर्वकाले, शस्त्रपूजा विधो किल ॥१३१०॥

❀ प्रस्थाननामानि ❀

प्रस्थान[१] मभिनिर्याण[२], यात्रा[३] व्रज्या[४] प्रयाणकम्[५] ।
गमन[६] चेति नामानि, कथ्यन्ते गमनस्य वै ॥१३११॥

❀ अभिषेणननाम ❀

स्याद ऽभिषेणनं[१] शत्रौ, सेनयाऽभिगमः खलु ।

❀ सुहृद्बलनाम ❀

सुहृद्बलं[१] तथा ऽऽसार.[२], मित्रबलं हि कथ्यते ॥१३१२॥

❀ प्रचक्रनाम ❀

पुनः प्रोक्तं हि लोकेऽपि, प्रचक्रं[१] चलितं बलम् ।

❀ प्रसारनाम ❀

प्रसरणं प्रसार[१] स्यात्, तृणकाष्ठादिहेतवे ॥१३१३॥

❀ अभिक्रमनाम ❀

रणे यानमभीतस्य, रिपून् प्रति ह्यभिक्रम[१] ।

❀ अभ्यमित्र्यनामानि ❀

अभ्यमित्रो[१] ऽभ्यमित्रीणो[२],
ऽभ्यमित्रीयो[३] ऽभ्यरि व्रजन् ॥१३१४॥

## ❀ उरसिलनाम ❀

उरसिल[1] उरस्वान्[2] स्याद्, विशाल उरवान् स हि ।

## ❀ ऊर्जस्वलनामानि ❀

ऊर्जस्व्यूर्जस्वलौ[2] प्रोक्त-मूर्जस्वान्[3] पुनरुच्यते ॥१३१५॥

## ❀ सायुगीननाम ❀

सांयुगीनो[1] हि सग्रामे, कुशल. कथ्यते बुधैः ।

## ❀ जेतृनामानि ❀

जेता[1] च जित्वरो[2] जिष्णु[3], जैत्र[4] श्च विजयी[5] पुन ॥१३१६॥

जेतृनामानि प्रोक्तानि, विजयिनो जनस्य हि ।

## ❀ जय्यनाम ❀

लोके यः शक्यते जेतुं, स जय्यः[1] कथ्यते जनैः ॥१३१७॥

## ❀ जेयनाम ❀

पुन श्च मन्यते लोकैः, जेयो[1] जेतव्यमात्रके ।

## ❀ वैतालिकनामानि ❀

सौखशायनिक[1] सौख,-शाय्यक[2] सौखसुप्तिक.[3] ॥१३१८॥

अर्थिक[4] श्चापि वैतालि-क[5] श्च वोधकर.[6] पुन ।

बन्दीजनोऽपि नामानि-षटसन्ति व्यवहारत ॥१३१९॥

घाण्टिका[1] श्चाक्रिका [2] बन्दी[1], सूतो[2] मङ्गलपाठक [3]।
मगधो[1] मागधो[2] मङ्ख:[3], इति नामानि स्यु पुनः ॥१३२०॥

## ❀ स्तुतिव्रतनाम ❀

स्तुतिव्रत[1] स्तथा नग्न [2], स्तुतिपाठक उच्यते ।

## ❀ भोगावलीनाम ❀

स्तुति पाठकग्रन्थस्तु, भोगावली[1] निगद्यते ॥१३२१॥

## ❀ पराक्रमनामानि ❀

शुष्म[1] शुष्मं[2] सह [3] शौर्य[4], बल[5] प्राण [6] पराक्रम [7]।
ऊर्ज्ज[8] ऊर्ग्[9] द्रविणं[10] द्युम्नं[11],
स्थाम[12] शक्ति[13] स्तथा तर:[14] ॥१३२२॥

ओज:[15] पराक्रमस्येति, नामानि सभवन्ति वै ।

## ❀ युद्धनामानि ❀

युद्धं[1] सङ्ख्यं[2] च सङ्ग्राम [3], समर्द[4] श्च समाह्वय [5] ॥१३२३॥

सङ्गर [6] सयुगं[7] सयत्[8], समिति [9] साम्परायिकम्[10] ।
समुदाय[11] समाघात [12],
समुदय[13] समित्[14] मृधम्[15] ॥१३२४॥

समीक[16] मभिसम्पात[17], प्रघात:[18] प्रविदारणम्[19]।

संस्फेट[20] श्चापि सम्फेट:[21],

संस्फोट:[22] समरो[23] रण:[24] ॥१३२५॥

आजि[25] रास्कन्दनं[26] द्वन्द्व[27],

प्रधनं[28] प्रविदारणम्[29]।

आहव:[30] सम्प्रहारो[31] युत्[32],

प्रहरणं[33] कलह:[34] कलि[35] ॥१३२६॥

आयोधनं[36] तथा राटि[37],

समिति[38] श्चापि विग्रह:[39]।

तथाऽऽक्रन्दो[40] ऽप्यनीक[41] श्च,

ऽभ्यामर्दो[42] ऽभ्यागम[43] पुन: ॥१३२७॥

एतन्नामानि कथ्यन्ते, युद्धस्य विबुधै किल।

### ॐ नियुद्धनाम ॐ

नियुद्धं[1] बाहुयुद्धं[2] च, कथ्यते तद् भुजोद्भवम् ॥१३२८॥

### ॐ युद्धपटहनाम ॐ

पटहा[1]-ऽऽडम्बरौ[2] प्रोक्तौ, युद्धस्य पटहे सदा।

### ॐ तुमुलनाम ॐ

युद्धं कोलाहलं युक्तं, तुमुलं[1] रणसङ्कुलम्[2] ॥१३२९॥

❀ नासीरनाम ❀

अग्रयान[1] च नसीरं[2], युद्धाग्रे गमनं भवेत् ।

❀ पीडननाम ❀

पीडन[1] मवमर्द[2] स्याद्, शत्रुतो देशपीडने ॥१३३०॥

❀ प्रपातनामानि ❀

अवस्कन्दो[1] ऽभ्यवस्कन्दो[2], ऽभ्यासादनं[3] तथैव च ।
धाटि[4] र्धाटी[5] प्रपात[6] श्चा-ऽऽक्रमणं छलतो भवेत् ॥१३३१॥

❀ सौप्तिकनाम ❀

सौप्तिकं[1] छलतो रात्रा-वाक्रमणं हि कथ्यते ।

❀ वीराशंसननामानि ❀

आजिभीष्मभू श्च वीरा-शंसनं[2] वीराशसनी[3] ॥१३३२॥
संहार कारिणी युद्ध भूम्या नाम त्रयं सदा ।

❀ नियुद्धभूनाम ❀

नियुद्ध[1] भूरक्षवाहा[2], मल्लयुद्धस्थलं भवेत् ॥१३३३॥

❀ मूर्च्छानामानि ❀

मूर्च्छा[1] मोह[2] कश्मल[3] श्च, नाम मूर्च्छितजन्तुनः ।

❀ वीरपाणकनाम ❀

वीरपाणं[1] तथा वीर,-पाणक[2] श्च निगद्यते ॥१३३४॥

वृत्त भाविनि वा युद्धे, मद्यपान निगद्यते ।

❀ पलायननामानि ❀

अपयान[1] श्च संदाव[2], सद्रावो[3] विद्रवो[4] द्रव[5] ॥१३३५॥

उद्द्राव[6] श्चापि प्रद्रावः[7], पलायन[8] मपक्रम[9] ।

नशन[10] चेति नामानि, युद्धात् पलायनस्य वै ॥१३३६॥

❀ जयनाम ❀

जय[1] श्च विजयो[2] नाम, जयार्थे वर्तते युधि ।

❀ पराजयनाम ❀

पराजयो[1] रणे भङ्गो, विज्ञायते मनीषिण ॥१३३७॥

❀ विप्लवनामानि ❀

विप्लवो[1] डमरो[2] डिम्वः[3], शृगाली[4] लुण्टने भवेत् ।

❀ वैरशुद्धिनामानि ❀

वैरनिर्यातनं[1] वैर,-शुद्धि[2] र्वैरप्रतिक्रिया[3] ॥१३३८॥

❀ बलात्कारनामानि ❀

बलात्कारो[1] हठ[2] श्चापि, प्रसभं[3] पुनरुच्यते ।

❀ स्खलितनाम ❀

छलं[1] च स्खलितं[2] नाम, मार्गच्यत स कथ्यते ॥१३३९॥

❀ परिभूतनामानि ❀

अभिभूतः[1] पराभूत[2], परिभूत[3] पराजित[4]।
जितो[5] भग्न[6] श्च नामानि, पराभवस्य मन्यताम् ॥१३४०॥

❀ पलायितनामानि ❀

पलायितो[1] गृहीतदिक्[2], नष्ट[3] स्तथा तिरोहित[4]।
पलायितस्य नामानि, विजानन्ति मनोषिण. ॥१३४१॥

❀ जिताहवनाम ❀

जितकाशी[1] जिताहवो[2], जयवान् कथ्यते युधि।

❀ पतितनाम ❀

प्रस्कन्न[1] पतित[2] श्चैव, पतितार्थे स मन्यते ॥१३४२॥

❀ चारकनामानि ❀

चार[1] श्च चारको[2] गुप्तिः[3], कारा[4] कारागृहे भवेत्।

❀ बन्दिनामानि ❀

प्रग्रहो[1] ग्रहको[2] बन्दी[3], चोपग्रहो[4] ऽपि कथ्यते ॥१३४३॥

## ❀ चातुर्वर्ण्यनाम ❀

चातुर्वर्ण्यं[1] विप्र-क्षत्र-वैश्य-शुद्रा नृणां भिदः ।
ब्रह्मचारी गृही वान-प्रस्थो भिक्षु रिति क्रमात् ।।१३४४।।

चत्वार आश्रमाः[1] सन्ति, तत्राद्यो ब्रह्मचारिणी[1] ।
वर्णी[2] स्याद् गृहमेधी[1] तु, गृहस्थ,[1] स्नातको[2] गृही[3] ।।१३४५।।

जेष्ठाश्रमी[4] द्वितीयो वै, प्रोक्त आश्रम ऊह्यताम् ।
वैरवानसो[1] वानप्रस्थ[2], स्तृतीयाश्रमवर्तिनि ।।१३४६।।

यति[1] सांन्यासिको[2] भिक्षु[3], तपस्वी[4] पारिरक्षक.[5] ।
पारिकांक्षी[6] च कर्मन्दी[7], पाराशरी[8] च मस्करी[9] ।।१३४७।।
स्याद् रक्तवसन[10] श्चेति, चतुर्थाश्रमवर्तिन ।

## ❀ स्थाण्डिलनाम ❀

स्थाण्डिलः[1] स्थण्डिलशायी[2], भूमिसुप्तो व्रती भवेत् ॥१३४८॥

## ❀ दान्तनाम ❀

तपः क्लेशसह[1] श्चैव, दान्तो ऽपि कथ्यते किल ।

## ❀ शान्तनामानि ❀

शान्तो[1] जितेन्द्रिय[2] श्रान्तः[3], नामानि संभवन्ति वै ॥१३४९॥

## ❀ शुद्धकर्मनाम ❀

अवदानं[1] कर्मशुद्धं[2], शुद्धाचरण मुच्यते ।

## ❀ ब्राह्मणनामानि ❀

भूदेवो[1] ब्राह्मणो[2] ब्रह्मा[3], षट्कर्मा[4] मुखसम्भवः[5] ॥१३५०॥

अग्रजन्मा[6] द्विजन्मा[7] च, द्विजाति[8] र्वाडवा[9] द्विज[10] ।

वर्णज्येष्ठः[11] शमीगर्भो[12],

वेदगर्भो[13] विप्रः[14] पुन.[15] ॥१३५१॥

एतस[15] श्चाग्रजो[16] मैत्र[17], श्चाग्रजाति[18] स्त्रयीमुख.[19] ।

सावित्र[20] सूत्रकण्ठ[21] श्च, नामानि ब्राह्मणस्य वै ॥१३५२॥

## ❀ बटुनामानि ❀

माणवको[1] वटु[2] श्चैव, बटु[3] र्बटुक उच्यते ।

## ❀ भिक्षानाम ❀

अन्नादियाचनं भिक्षा[1], ग्रासमात्रक[2] मुच्यते ॥१३५३॥

## ❀ उपनयनामानि ❀

उपनय[1] श्चोपनायो[2], वटूकरण[3] मानय[4] ।

यज्ञोपवित सस्कार·, कथयन्ति मनीषिण· ॥१३५४॥

## अग्नीन्धननामानि

अग्नीन्धनं[1] तथाऽग्निधा[2], चाऽऽग्नीध्रो[3] चाऽग्निकारिका[4] ।
अग्निकार्यं च नामानि, होमाग्नि-ज्वलने भवेत् ॥१३५५॥

## दण्डभेदाः

प्रोक्तावाषाढ[1]-पालाशौ[2], व्रत पालाशदण्डके ।
राम्भ[1]स्तु वैणवो[2]ऽपि स्याद्, दण्डो वंशस्य वै व्रते. ॥१३५६॥

शैल्व[1] सारस्वतो[2] बैल्व[3], बैल्वदण्डो हि कथ्यते ।
पैलव[1]श्चौपरोधिकः[2], पीलुदण्डो हि मन्यते ॥१३५७॥

आश्वत्थो[1] जितनेमि[2]श्च, व्रते पैप्पलदण्डकः ।
औदुम्बर[1] उलूखलौ[2], दण्ड उदुम्बरस्य च ॥१३५८॥

## जटानाम

तापसादेः शिरः केशे, जटा[1] सटा[2] च कथ्यते ।

## वृषीनामानि

वृषी[1] वृसी[2] तथा पीठ[3], तस्य दर्भासनं पुन ॥१३५९॥

## कमण्डलुनाम

कमण्डलु[1]श्च कुण्डिका[2], तस्य पानीय पात्रकम् ।

## श्रोत्रियनाम

श्रोत्रिय[1] श्छान्दसो[2] विद्वे, वेदज्ञातरि मन्यते ॥१३६०॥

❀ यजमाननामानि ❀

आदेष्टा[1] च व्रती[2] यष्टा[3], यजमान[4] श्च याजक[5] ।
एतन्नामानि कथ्यन्ते, यज्ञकर्तरि पुंसि वै ।।१३६१।।

❀ दीक्षितनाम ❀

दीक्षित[1] सोमयाजी[2] च, स्यात् सोमयोज्ञकारक ।

❀ इज्याशीलनाम ❀

इज्यशीलो[1] यायजूको[2], यज्ञकर्मस्वभाववान् ।।१३६२।।

❀ यज्वनोनामानि ❀

सोमरसाकृष्य यज्ञ-कर्त्ता यज्वा[1] ऽऽसुतीवल:[2] ।

❀ सोमपनामानि ❀

सोमप[1] स्तु सोमपीती[2], सोमपीथी[3] तथैव च ।।१३६३।।

सोमपीवी[4] च यज्ञे स्यात्, स सोमरसपीबक ।

❀ स्थपतिनाम ❀

बृहस्पति र्यज्ञकर्त्ता, स्थपति[1] र्गीः पतीष्टिकृत्[2] ।।१३६४।।

❀ सर्ववेदानाम ❀

सर्ववेदा:[1] स एवास्ति, यज्ञे सर्वसमर्पति ।

## ❀ यजुर्विदोनाम ❀

यजुर्वेदस्य च ज्ञाता, यजुर्विद[1]-ध्वर्यु रुच्यते ॥१३६५॥

## ❀ ऋग्विन्नाम ❀

ऋग्वेदस्य पुन र्ज्ञाता, ऋग्विद्[1] होता[2] सदोच्यते ।

## ❀ सामविदोनाम ❀

उद्गाता[1] च सामविद्[2] वै, सामवेदस्य ज्ञानवान् ॥१३६६॥

## ❀ यज्ञनामानि ❀

यज्ञो[1] यागो[2] मखो[3] मन्युः[4], स्तोम[5] श्च सस्तर[6] सवः[7] ।
सप्ततन्तु[8] क्रतु[9] सत्रं[10],
वितानं[11] बर्हि[12] रध्वर[13] ॥१३६७॥

अध्ययनं[1] ब्रह्मयज्ञो[2], ब्रह्मज्ञानं स कथ्यते ।
देवयज्ञो[1] वषट्कारो[2], होमो[3] होत्रं[4] तथाऽऽहुतिः[5] ॥१३६८॥

एतन्नामानि कथ्यन्ते, देवयज्ञस्य पण्डितै ।

## ❀ श्राद्धनामानि ❀

श्राद्धं[1] तथा पिण्डदानं[2], पितृयज्ञ[3] श्च तर्पणम्[4] ॥१३६९॥

एतन्नामानि मन्यन्ते, पितृयज्ञस्य कोविदै ।
नरयज्ञस्य नामास्ति, नृयज्ञो[1] ऽतिथिपूजनम् ॥१३७०॥

भूतयज्ञस्य नामाऽस्ति, भूतयज्ञ[1] स्तथा बलि:[2] ।
प्रोक्ता एते महायज्ञा.[1], पञ्चापि वै महीतले ॥१३७१॥

यज्ञोय शुक्लपक्षान्ते, स पौर्णमास[1] उच्यते ।
दर्शो[2] ऽपि कृष्णपक्षान्ते, आमावास्य[2] श्च मन्यते ॥१३७२॥

सौमिकी[1] दीक्षणीयेष्टि[2], स्याद् दीक्षा[1] व्रतसङ्ग्रह.[2] ।
सुगहना वृतिः कुम्बा[1], वेदो[1] भूमि परिष्कृता ॥१३७३॥

चत्वरं[1] स्थण्डिल[2] यज्ञा ऽसंस्कृत भूमि रुच्यते ।
पशुहिंसायज्ञस्तम्भ·, स्याद् यूपो[1] यज्ञकीलक[2] ॥१३७४॥

चषाल[1] श्चापि वै यूप-कटक[2] कथ्यते किल ।
यज्ञयूपाग्रभागे यद्, वलयाकार वस्तु तद् ॥१३७५॥

घृतावनि[1] स्तथा यूप-कर्णो[2] वै कथ्यते सदा ।
घृतस्पर्शयज्ञस्तम्भ-स्यैकभाग. स मन्यते ॥१३७६॥

यूपस्याग्रविभागो वै, यूपाग्रभाग[1] उच्यते ।
तर्म[2] वै कथ्यते नाम, निर्मन्थदारु[1] चाऽरणि.[2] ॥१३७७॥

❀ अग्निभेदा. ❀

दक्षिणो[1] गार्हपत्य[2] श्चा,-ऽऽहवनीय[3] स्त्रयोऽग्नय ।
इदमग्नित्रयं विश्वे, त्रेता[1] हि कथ्यते बुधैः ॥१३७८॥

मन्त्रादिसंस्कृतो ऽग्नि र्वै, प्रणीतो[1] मन्यते पुनः ।
ऋग धाय्या[1] सामीधेनी[2] च, समिदाधीयते यया ॥१३७९॥

## ❀ समिन्नामानि ❀

[1]समिदिन्धन[2]-मेधे[3]—ध्म[4]-तर्पणं[5]-धांसि[6] सन्ति षट् ।

## ❀ भस्मनामानि ❀

भसित[1] भस्म[2] भूति[3] श्च, रक्षा[4] क्षार[5]-श्च कथ्यते ।।१३८०।।

पात्रं[1] स्रुवादिकं[2] प्रोक्तं, स्रुक्[1] स्रुव[2] श्चापि मन्यते ।
अधरा सोपभृत्[1] स्याद् वै, जुहू[1]र्हि पुनरुत्तरा ॥१३८१॥

ध्रुवा[1] स्यात् सर्वसंज्ञार्थं, यस्यां घृतं निधीयते ।
हन्येत योऽभिमन्त्र्यात्र, स स्यात् पशुरुपाकृत[1] ॥१३८२॥

शमनं[1] शसन[2] चैव, मखे वधो हि प्रोक्षणम्[3] ।
पुन परम्पराकं[4] वै, विजानन्ति मनीषिण ।।१३८३।।

अभिचारो[1] हि हिंसार्थं, कर्म यत् क्रियते च तत् ।
स्याद् यज्ञयोग्यकार्यं वै, यज्ञार्हं[1] चापि यज्ञियम्[2] ॥१३८४॥

हवि[1] स्तथैव सान्नाय्य[2], बलिदान हि कथ्यते ।
क्षीरशर[1] पयस्या[2] च, शृतोष्णक्षीरम दधि ॥१३८५॥

आमिक्षा[3] ऽपि पुन प्रोक्तं, तन्मस्तुनि तु वाजिनम्[1] ।
हव्य सुरेभ्यो[2] दातव्य,-मग्निद्वारा हि कथ्यते ॥१३८६॥

विप्रद्वारा प्रदत्तं च पितृभ्य कव्य[1]-मोदनम् ।
घृते हि दधिसंयुक्ते, पृषदाज्य[1] पृषातक[2] ॥१३८७॥

दध्याज[3] च दधिप्राज्य[4], कथ्यते पण्डितै र्जनै ।
दध्ना स्यान् मधुसंपृक्त, मधुपर्क[1] महोदय.[2] ॥१३८८॥

हवित्री[1] होमकुण्ड[2] ञ्च, होमाधारस्थले द्वयम् ।
हव्यपाक[1] श्चरु[2] श्चैव, हव्यान्नेन विरच्यते ॥१३८९॥

अमृतं[1] यज्ञशेष[2] श्च, यज्ञशिष्टे हि वस्तुनि ।
विघसो[1] भुक्तशेषको[2], यज्ञे भुङ्क्ते हि योऽधिकम् ॥१३९०॥

यज्ञान्ते क्रियते स्नानं, यज्ञान्तो[1] ऽवभृथो[2] हि स' ।
प्रोक्तं पूर्त्तं[1] पुन र्वाप्या,-दीष्ट[1] तथा मखक्रिया[2] ॥१३९१॥

इष्टापूर्त्त[1] तु पूर्वोक्त,-मुभयं कथ्यते पुनः ।
विष्टरो[1] बर्हिर्मुष्टि[2] श्च, दर्भासने प्रयुज्यते ॥१३९२॥

आहिताग्नि[1] रग्निहोत्री[2] चाऽऽग्न्याहितो[3] ऽग्निचित्[4] तथा ।
अग्न्याधान[1] मग्निहोत्र[2],-माऽग्निरक्षण[3]-मित्यपि ॥१३९३॥

दर्वी[1] दर्वि[2] स्तथैवाऽस्ति, नामेह घृतलेखनी[3] ।
महाज्वालो[1] महावीरो[2], होमाग्नि[3] श्च प्रवर्गवत्[4] ॥१३९४॥

निगणो[1] होमभस्म[2] श्च, होमधूमे प्रयुज्यते ।
वैष्टुतं[1] वै होमभस्म[2], ख्यातं होमजभस्मनि ॥१३९५॥

आचमन[1] मुपस्पर्शो[2], जलेन मुखस्पर्शने ।
सेक[1] श्च सेचनं[2] धारो[3], घृतादे रग्निसिंचने ॥१३९६॥

ध्यानयोगासनं[1] ब्रह्मा-सनं ख्यातं महीतले ।
स्वाध्यायादि क्रियाजात, ब्रह्मवर्चस[1] मुच्यते ॥१३९७॥

वृत्ताध्ययनर्द्धि[2] श्चापि, तदेव कथ्यते बुधैः ।
ब्रह्माञ्जलि[1] स्तु वेदस्य, पाठकाले कृताञ्जलि ॥१३९८॥

पाठे स्यान् मुखनिष्क्रान्ता, विप्रुषो ब्रह्मबिन्दव[1] ।

## ❀ पारायणनाम ❀

साकल्यवचनं[1] पारा-यणं[2] सम्पूर्णवाचने ॥१३९९॥

## ❀ कल्पनामानि ❀

क्रम[1] कल्पो[2] विधि[3] श्चापि, कल्पसंज्ञा त्रय भवेत् ।
अङ्गुष्ठमूल ब्राह्म[1] स्यात्, तीर्थं काय[1] कनिष्ठयो ॥१४००॥

तर्जन्यङ्गुष्ठान्त पित्र्यं[1], दैवतं[2] त्वङ्गुलीमुखे ।
हस्तस्य च मध्यमात्रे, सौम्य[1] तीर्थं निगद्यते ॥१४०१॥

ब्रह्मत्वं[1] ब्रह्मसायुज्य[2], ब्रह्मभूय[3] च मन्यते ।
देवत्व[1] देवसायुज्यं[2], देवभूय[3] च कथ्यते ॥१४०२॥

मूर्खत्व[1] मूर्खसायुज्य[2], मूर्खभूय[3] च मन्यते ।
ग्रहण वेदपाठस्य, उपाकरण[1] मुच्यते ॥१४०३॥

स्वाध्याय[1] श्च जप[2] प्रोक्तो, वेदस्याऽध्ययने किल ।
औपवस्तं[1] चौपवस्त्र[2],-मुपवस्त्र[3] तथैव च ॥१४०४॥

उपवासो[४] निगद्येत, व्रते भोजन रोधके ।
कृच्छ्रं[१] चान्द्रायणं[२] सान्त,-पनं[३] पापविनाशके ॥१४०५॥

संन्यास्यनशने ख्यातः, प्राय[१] शब्द प्रयुज्यते ।
नियमः[१] पुण्यकं[२] चैव, व्रतं[३] तपो[४] ऽपि कथ्यते ॥१४०६॥

## ❋ चरित्रनामानि ❋

चरित्रं[१] चरितं[२] वृत्त[३], चारित्रं[४] चरणं[५] तथा ।
आचार[६] श्चापि शीलं[७] च, मन्यते पण्डितैः जनैः ॥१४०७॥

जप्ये ऽघमर्षणं[१] सर्वै-नोध्वंसि च प्रयुज्यते ।

## ❋ पादग्रहणनामानि ❋

पादयोः स्पर्शने पाद,-ग्रहण[१] मभिवादनम्[२] ॥१४०८॥
तथोपसंग्रह[३] श्चेति, कथ्यते कोविदैः किल ।

## ❋ यज्ञसूत्रनामानि ❋

प्रोद्धृते दक्षिणे स्कन्धे, यज्ञोपवीत[१] मुच्यते ॥१४०९॥

उपवीतं[२] पवित्रं[३] च, यज्ञसूत्रं[४] तथैव च ।
ब्रह्मसूत्रं[५] पुन श्चैव, प्रख्यातं व्यवहारतः ॥१४१०॥

प्राचीनावीत[१] माऽऽवीतं[२], वामे स्कन्धे हि प्रोद्धृते ।
कथ्यते कण्ठमालेव, निवीतं[१] कण्ठलम्बितम् ॥१४११॥

❀ वाल्मीकिनामानि ❀

आदिकवि[1] श्च वाल्मीकिः[2], वाल्मीक[3] श्च कवि[4] कुशी[5] ।
मैत्रावरुणि[6] र्वल्मीक[7], मैत्रावरुण[8] उच्यते ॥१४१२॥

❀ व्यासनामानि ❀

वेदव्यास[1] स्तथा व्यासो[2], माठरो[3] बादरायण[4] ।
द्वैपायन[5] श्च कानीन[6], पाराशर्यो[7] ऽपि कथ्यते ॥१४१३॥

❀ व्यासमातृनामानि ❀

सत्यवती[1] च शालङ्का,-यनजा[2] गन्धकालिका[3] ।
तथा योजनगन्धा[4] वै, गन्धवती[5] च वासवी[6] ॥१४१४॥
मत्स्योदरी[7] च दाशेयी[8],
नामान्यष्टौ भवन्ति वै ॥१४१५॥

❀ परशुरामनामानि ❀

रामः[1] परशुराम[2] श्च, पर्शुराम[3] श्च भार्गव[4] ।
जामदग्न्य[5] स्तथा रैणु,-केय[6] श्च रेणुकासुत[7] ॥१४१६॥

❀ नारदनामानि ❀

नारदो[1] देवब्रह्मा[2] च, पिशुन[3] कलिकारकः[3] ।

## ❀ वशिष्ठऋषिनामानि ❀

ख्यात स्त्वरुन्धतीजानि[१], र्वशिष्ठ[२] कथ्यते पुनः ॥१४१७॥

अस्य भार्या ऽक्षमाला[१] च मन्यतेऽरुन्धती[२] पुनः ।

## ❀ विश्वामित्रऋषिनामानि ❀

प्रोक्त त्रिशङ्कुयाजी[१] स, गाधेयो[२] गाधिनन्दनः[३] ॥१४१८॥

विश्वामित्र[४] श्च प्रख्यात., कौशिको[५] ऽपि हि कथ्यते ।

## ❀ दुर्वासाऋषिनाम ❀

ऋषिः कुशारणि[१] श्चैव, दुर्वासा[२] अपि मन्यते ॥१४१९॥

## ❀ गौतमऋषिनाम ❀

गौतम[१] श्च शतानन्दो[२], नामऽस्ति गौतमस्य वै ।

## ❀ याज्ञवल्क्यनामानि ❀

योगीश[१] श्चापि योगेशो[२], ब्रह्मरात्रि[३] स्तथैव च ॥१४२०॥

याज्ञवल्क्य[४] श्च नामास्ति, यज्ञवल्कसुतस्य हि ।

## ❀ पाणिनिनामानि ❀

दाक्षीपुत्र[१] स्तु दाक्षेय[२], सालातुरीय[३] इत्यपि ॥१४२१॥

पाणिनि[४] श्चेति नामापि, पाणिनीयस्य कथ्यते ।

❀ पतञ्जलिऋषिनाम ❀

गानर्दीय.[1] पतञ्जलिः[2], प्रोक्तं नाम पतञ्जलेः ॥१४२२॥

❀ कात्यायननामानि ❀

कात्य.[1] कात्यायन[2] श्चैव, मेधाजिच्च[3] पुनर्वसु[4] ।
वररुचि[5] श्च नामानि, कात्यायनस्य सन्ति वै ॥१४२३॥

❀ व्याडिमुनिनामानि ❀

विन्ध्यवासी[1] तथा व्याडिः[2], नन्दिनीतनय.[3] पुनः ।
व्याडिमुने श्च नामानि, कथयन्ति हि कोविदाः ॥१४२४॥

❀ स्फोटायनऋषिनामानि ❀

कक्षिवान्[1] स्फोटनः[2] स्फोटा-यनः[3] स्फौटायन[4] श्च वै ।
स्फोटानयस्य नामानि, कथयन्ति हि पण्डिताः ॥१४२५॥

❀ पालकाप्यऋषिनामानि ❀

प्रोक्तं नाम पालकाप्यः[1], कारेणवः[2] करेणभूः[3] ।

❀ वात्स्यायनऋषिनामानि ❀

वात्स्यायनो[1] द्रामिल[2] श्च, चाणक्यः[3] चणकात्मजः[4] ॥१४२६॥

कौटल्य[5] श्चापि कौटिल्यो[6], मल्लनाग[7] स्तथाऽङ्गुलः[8] ।
पुन श्च पक्षिलस्वामी[9], विष्णुगुप्तो[10]ऽपि कथ्यते ॥१४२७॥

### ❀ क्षतव्रतनाम ❀

क्षतव्रतो[1] ऽवकीर्णी[2] च, क्षतव्रतस्य नाम वै।
स व्रतभङ्गकारक-ब्रह्मचारी निगद्यते ॥१४२८॥

संस्कारवर्जितो[1] व्रात्य[2], संस्काररहितो द्विजः।
शिश्निदानो[1] दुराचारः[2], कृष्णकर्मा[3] ऽपि कथ्यते ॥१४२९॥

ब्रह्मबन्धु[1] श्च नामाऽस्ति, द्विजो ऽधमोऽपि मन्यते।
नष्टाग्नि[1] विरहा[2] विप्रो, विनष्टाग्निहोत्राग्निवत् ॥१४३०॥

विप्रो द्विजब्रुवो[1] जाति,-मात्रजीवी[2] च मन्यते।
धर्मध्वजी[1] लिङ्गवृत्ति[2], पाखण्डो वेषवान् स वै ॥१४३१॥

वेदहीनो[1] निराकृति[2], स्वाध्याय रहितो द्विजः।
वार्त्ताशी[1] भोजनार्थ यो, ब्रूते गोत्रादिकं निजम् ॥१४३२॥

उच्छिष्ट भोजनो[1] देव-नैवेद्य बलिभक्षकः।
पुन श्च कथ्यते देव-नैवेद्यबलिभोजनः[2] ॥१४३३॥

### ❀ अजपनाम ❀

अजप[1] स्त्वसदध्येता[2] कुपाठकजन स्मृत.।

### ❀ शाखारण्डनाम ❀

अन्य शाखा कर्मकर्त्ता शाखारण्डो[1] ऽन्यशाखकः[2] ॥१४३४॥

※ शस्त्रजीविनाम ※

शस्त्राजीव[1] स्तथा काण्ड-स्पृष्ट[2] शस्त्रेण जीविते ।

※ गुरुघ्ननाम ※

गुरु हत्याकर्तृ नाम-गुरुहा[1] नरकीलक[2] ॥१४३५॥

※ मलनाम ※

देव पूजा विना यः स्यात् स मलः[1] कथ्यते बुधैः ।

※ मलिम्लुचनाम ※

मलिम्लुचः[1] पञ्चयज्ञ परिभ्रष्ट[2] स्तथा हि सः ॥१४३६॥

※ खरुनाम ※

निषिद्धैक रुचिर्लोके खरु[1] रित्यभिधीयते ।

※ अभ्युदितनाम ※

अभ्युदितस्तु[1] यः शेते सूर्योदये च सत्यपि ॥१४३७॥

※ अभिनिर्मुक्तनाम ※

सूर्यास्त समये शेते सोऽभिनिर्मुक्त[1] नामवान् ।

※ वीरोज्झनाम ※

वीरोज्झ[1] स्तु स ख्यातो न जुहोति कदापि यः ॥१४३८॥

❀ वीरोपजीवनाम ❀

वीरोपजीवकः[1] ख्यातो यो होम-नाम याचकः।

❀ वीरविस्रावक ❀

शूद्र वित्त धनैर्होता-वीरविस्रावको भवेत् ॥१४३९॥

❀ आर्हतनाम ❀

आर्हत.[1] स्याद्वाद वादी[2] जैनो[3] ऽनेकान्तवादिनि[3]।

❀ सौगतनाम ❀

शून्यवादी[1] सौगतस्तु[2] वौद्ध[3] एव निगद्यते ॥१४४०॥

❀ नैयायिकनाम ❀

आक्षपाद[1] स्तथा नाम यौगो[2] नैयायिको[3] ऽपि च।

❀ सांख्यनाम ❀

सांख्य[1] स्तु कापिलः[2] प्रोक्त सांख्य शास्त्रस्य ज्ञातरि ॥१४४१॥

❀ वैशेषिकनाम ❀

वैशेषिकः[1] काणादः[2] स्या. दौलुक्यो[3] न्याय. ज्ञातरि।

❀ चार्वाकनाम ❀

वार्हस्पत्यो[1] नास्तिक.[2] स्यात् लोकायतिक[3] इत्यपि ॥१४४२॥

लोकायितिक[४] नामापि चार्वाका[५] श्चारु भाषणात् ।

❀ क्षत्रियनाम ❀

क्षत्र[१] तु क्षत्रियो[२] राजा-राजन्यो[३] बाहुसंभव[४] ॥१४४३॥

❀ वैश्यनाम ❀

अर्यो[१] भूमि स्पृशो[२] वैश्या[३] उरव्या[४] उरुजा[५] विश[६] ।

❀ वृत्तिनाम ❀

वाणिज्यं[१] पशुपाल्य[२] ञ्च कर्षणं[३] नाम च स्मृतम् ॥१४४४॥

❀ आजीविकानाम ❀

आःजीवो[१] जीवनं[२] वार्ता[३] जीविका[४] वृत्ति[५] वेतने[६] ।

❀ उञ्छनाम ❀

उञ्छो[१] धान्य कणादान[२] कणिशाद्यर्जनं[३] शिल्यम्[४] ॥१४४५॥

❀ ऋतनाम ❀

ऋत[१] मुञ्छशिल[२] प्रोक्तमुभयोर्ग्रहणे सदा ।

❀ कृषिनाम ❀

अनृत[१] प्रमृत[२] लोके कृषि[३] रेव निगद्यते ॥१४४६॥

❀ याचितनाम ❀

याचित[१] ञ्च मृत[२] प्रोक्तं भिक्षया लब्धवस्तुनि ।

## ❀ अयाचितनाम ❀

अविनश्वर[1] ममृतं[2] स्यादयाचित[3] मिति त्रयम् ॥१४४७॥

## ❀ सेवानाम ❀

श्वजीविका[1] च सेवा[2] च सेवावृत्ति[3] रिहोच्यते ।

## ❀ वाणिज्यनाम ❀

सत्यानृतं[1] वणिज्या[2] च वाणिज्य[3] मिति ज्ञायताम् ॥१४४८॥

## ❀ वणिङ्नाम ❀

वाणिजः[1] सार्थवाह[2] श्च वणिक्[3] क्रयविक्रयिकः[4] ।
पण्याजीव[5] आपणिको[6] वैदेह[7] श्च प्रापणिकः[8] ॥१४४९॥

## ❀ क्रयिनाम ❀

क्रयिकः[1] क्रायको[2] लोके क्रयी[3] च कथ्यते पुनः ।

## ❀ विक्रयिनाम ❀

विक्रयिको[1] विक्रयी[2] च विक्राय[3] कोऽपि ज्ञायताम् ॥१४५०॥

## ❀ मूल्यनाम ❀

मूल्य[1] मर्घो[2] ऽवक्रय[3] श्च भाटको[4] वस्न[5] मित्यपि ।

## ❀ नीविनाम ❀

मूलद्रव्यं[1] परिपणो[2] नीवी[3] नीविश्च ज्ञायताम् ॥१४५१॥

❀ लाभनाम ❀

लाभ[1] फल[2] श्च व्यापारे मूलादधिकप्रापणे ।

❀ विनिमयनाम ❀

व्यतिहारो[1] विनिमयो[2] नैमेयो[3] नियम[4] स्तथा ॥१४५२॥

परिदान[5] परावर्त्तो[6] वैमेय[7] परिवर्तनम् ।

❀ निक्षेपनाम ❀

उपानिधि[1] श्च प्रख्यातो निक्षेपो[2] न्यास[3] इत्यपि ॥१४५३॥

❀ प्रतिदाननाम ❀

परिदानं[1] प्रतिदानं[2] न्यासार्पण[3] मपिस्मृतम् ।

❀ क्रेयनाम ❀

क्रेतव्ये कथ्यते क्रेयं[1] क्रय्य[2] न्यस्तं क्रयाय यत् ॥१४५४॥

❀ पण्यनाम ❀

विक्रेयं[1] परितव्य[2] च पण्य[3]मित्येव कथ्यते ।

❀ सत्यापननाम ❀

सत्यापनं[1] सत्यकार[2] सत्याकृति[3] रिति पुन ॥१४५५॥

❀ विक्रयनाम ❀

विपणो[1] विक्रयः[2] शब्द. प्रख्यातो वस्तु विक्रये ।

❀ गण्यनाम ❀

गणनीयं[1] गणेय[2]श्च गण्यं[3] संख्येय[4] मित्यपि ॥१४५६॥

❀ सख्यानाम ❀

सख्या नाम्ना प्रसिद्धोऽस्ति-एक द्वि त्रि क्रमाद्दश ।
एकं दश शत ञ्चैव सहस्र मयुत पुनः ॥१४५७॥

लक्षश्च नियुतश्च प्रयुतं कोटिरित्यपि ।
सर्व दशगुणं पूर्वात् ज्ञायते गण्यते जनै. ॥१४५८॥

अर्बुदं[9] दशकोटि श्चा,-ऽब्जं[10] च खर्वं[11] दशाब्जकम् ।
निखर्वं[12] दशखर्व वै, पुन. सङ्ख्यं महाम्बुजम्[13] ॥१४५९॥

अग्रेऽपि दशनिखर्वं, शङ्कु[14] र्दशमहाम्बुजम् ।
तथा वार्द्धि[15] समुद्रोऽपि, दशशङ्कु निगद्यते ॥१४६०॥

अन्त्यं[16] दशवार्द्धिमान, मध्यं[17] दशान्त्यमानकम् ।
दशमध्यप्रमाणं च, परार्द्धं[18] सङ्ख्यकं किल ॥१४६१॥

कथ्यते पण्डितै र्लोके, र्लोके ऽस्मिन् गणनाक्रिया ।
असङ्ख्य[1] द्वीप-वार्द्धी-न्दु-सूर्यादिक प्रवर्त्तते ॥१४६२॥

पुन श्च वर्त्तते विश्वे, पुद्गलाऽऽत्माद्यनन्तकम्[1] ।

❀ नाविकभेदाः ❀

सांयात्रिक[1] स्तथा पोत-वणिक्[2] च कथ्यते बुधैः ॥१४६३॥

बोहित्थं[1] चापि वोहित्थं[2], वहनं[3] च वहित्रकम्[4] ।
यानपात्र[5] तथा पोतः[6], प्रोक्त प्रवहरण[7] पुनः ॥१४६४॥
पोतवाहो[1] नियामको[2], निर्यामो[3] मार्गदर्शक ।

## ❀ नाविकनाम ❀

नाविकः[1] कर्णधार[2] श्च, नौसञ्चालक उच्यते ॥१४६५॥

## ❀ नौकानामानि ❀

नौका[1] नौ[2] श्च तरी[3] बेडा[4], तरणी[5] तरणि[6] स्तरि[7] ।
मङ्गिनी[8] चेति नामानि, नौकायाः मन्यतां जन ॥१४६६॥

## ❀ द्रोणीनाम ❀

काष्ठाम्बुवाहिनी[1] द्रोणी[2], जलीयदारुपात्रकम् ।

## ❀ नौकादण्डनामानि ❀

क्षेपरिण[1] क्षेपणी[2] नौका-दण्ड[3] श्च क्षिपणी[4] पुन ॥१४६७॥
नौसञ्चालकदण्डस्यै,-तन्नामानि सभवन्ति वै ।
कूपको[1] गुणवृक्ष[2] श्च, प्रोक्तो नौकूपस्तम्भक ॥१४६८॥
पोलिन्दा[1] श्चान्तरादण्डा[2], नौकाया मध्यदण्डका ।
प्रोक्तो नौकाग्रभागस्तु, मङ्ग[1] श्च मङ्गिनीशिर[2] ॥१४६९॥
अभ्रि[1] श्च काष्ठकुद्दाल[2], नावो ऽवकारक्षेपके ।
सेचनं[1] सेकपात्र[2] नौ-जलक्षेपणमात्रके ॥१४७०॥

कर्ण[१] श्च केनिपात[२] श्च, कोटिपात्र[३] स्तथैव च ।
अरित्रं[४] चेति नौकाया', सुकान कथ्यते बुधै. ॥१४७१॥

❀ लघुनौनामानि ❀

उडुप[१] श्च तरण्ड[२] श्च, कोलो[३] भेल[४] स्तथा प्लव[५] ।
एतन्नामानि कथ्यन्ते, लघुनौवस्तुनो बुधै ॥१४७२॥

आतर[१] स्तरपण्यं[२] च, नौशुल्क मुच्यते जनैः ।

❀ कुसीदकनामानि ❀

वृद्धयाजीवो[१] वार्धुषि:[२], वार्धुषिक[३] कुसीदक.[४] ॥१४७३॥
द्वैगुणिक[५] श्च नामाऽपि, प्रोक्तं कुशीद ग्राहिण. ।

❀ कुशीदनामानि ❀

कुशीदं[१] कुषीदं[२] चाऽर्थ,-प्रयोग[३] वृद्धिजीवनम्[४] ॥१४७४॥
कुपीदं[५] चेति नामानि, कुसीदस्य भवन्ति वै ।

❀ वृद्धिनाम ❀

वृद्धि.[१] कलान्तरं[२] नाम, मूलधनस्य वर्द्धने ॥१४७५॥

❀ ऋणनामानि ❀

पर्युदञ्चन[१] मुद्धार[२], ऋणं[३] नाम त्रयं भवेत् ।

### ※ याचितकनाम ※

याचितक[1] तु नामेदं, याच्ञयाप्ते प्रकथ्यते ॥१४७६॥

### ※ आपमित्यकनाम ※

यद् वस्तु परिवृत्या वै, नीयते चाऽऽपमित्यकम्[1] ।

### ※ अधोमर्णनाम ※

ग्राहक[1] श्चाऽधमर्णो[2] वै, ऋण नेतरि कथ्यते ॥१४७७॥

### ※ उत्तमर्णनाम ※

दायक[1] श्चोत्तमर्णो[2] वै, ऋण दातरि मन्यते ।

### ※ प्रतिभूनाम ※

प्रतिभू[1] र्लग्नक · प्रोक्त. प्रतिनिधि र्जनस्य वै ॥१४७८॥

### ※ साक्षिनामानि ※

मध्यस्थ·[1] प्राश्निक [2] साक्षी[3], स्थेय·[4] सत्यं वदेत् सदा ।
कथ्यते कूटसाक्षी[1] च, मिथ्याभाषी निगद्यते ॥१४७९॥

दुष्टसाक्षी[1] तथा सूची[2], दुष्टतयाऽन्यथा वदेत् ।

### ※ बन्धकनाम ※

आधि[1] स्तु बन्धको[2] लोके, तत्र स्याद्यत्र रक्ष्यते ॥१४८०॥

## ❀ पौतवनाम ❀

पौतव[1] यौतव[2] नाम, तुलादौ मापने स्मृतम् ।

## ❀ मापननाम ❀

द्रुवयं[1] पाय्य[2] मित्यादि, मापनं स्याद् विभिन्नकम् ॥१४८१॥

तुलादौ पौतवं[1] मान, द्रुवयं[1] कुडवादिभि ।
पाय्यं[1] हस्तादिभि र्मान,-मिति भेदोऽत्र ज्ञायताम् ॥१४८२॥

## ❀ सुवर्णमापननाम ❀

गुञ्जा लताफल किञ्चिद्, रक्तिका सैव कथ्यते ।
पञ्च गुञ्जाः माषक [1] स्यात्, स्वर्णकारस्य तोलने ॥१४८३॥

षोडश माषकाणां तु, कर्षः[1] स्यादऽक्ष[2] एव वा ।
चतु कर्षा पलं[1] ज्ञेयं, पुनः कर्षचतुष्टयम्[2] ॥१४८४॥

प्रोक्त सुवर्णो[1] हेम्नोऽक्षे, विस्तो[2] ऽप्यशिति रक्तिका ।
कथ्यते कुरुविस्त[1] स्तु, पलमेक सुवर्णकम् ॥१४८५॥

ुला[1] पलशतं[2] ज्ञेय, सुवर्णादिक मापने ।
शलाट[1] आचितो[2] भारः[3], शाकटीन[4] श्च शाकट.[5] ॥१४८६॥

विशति तुलामानं त, द्विद्वसहस्रपलानि च ।
दशभारप्रमाणन्तु, ज्ञातव्यः आचित.[1] खलु ॥१४८७॥

### ❀ धान्यादिमापननाम ❀

उभयाञ्जलिमानं वै, प्रसृत[1] कुडवो[2] ऽथवा ।
चतुर्भि कुडवै. प्रस्थ[1], प्रोच्यते हि महीतले ।।१४८८।।

आढक[1] श्चतुर्भिः प्रस्थ, द्रोण[1] श्चतुर्भि राढकै ।
खारी[1] षोडशभि र्द्रोणै, मन्यते व महीतले ।।१४८९।।

चतुर्विंशत्यङ्गुलानां, हस्तो[1] भवति मापने ।
चतुर्हस्तस्तु विज्ञेयो, दण्डो[1] मापन कर्म्मणि ।।१४९०।।

दण्डानान्तु द्विसहस्र, क्रोशो[1] गव्यूत[2] मुच्यताम् ।
गव्यूत[1] गोरुतं[2] गव्या[3], गव्यूति[4] श्च द्विक्रोशक ।।१४९१।।

योजनं[1] तु चतुष्क्रोश[2],
मार्गमापन कर्म्मणि ।।१४९२।।

### ❀ पाशुपाल्यनाम ❀

पाशुपाल्यं[1] जीववृत्तिः[2], पशुपालन कर्मणि ।

### ❀ गोपालकनामानि ❀

गोपालन कार्य्यरतो, गवीश्वरो[1] गवेश्वर[2] ।।१४९३।।

गोमान्[3] गोमी[4] च गोधुक्[1] तु गोसङ्ख्य[2] श्च वल्लव[3] ।
आभीर[6] श्चापि गोपालो[4], गोप[8] श्चेति हि मन्यते ।।१४९४।।

प्रसिद्धो ऽधिकृतो गोषु, गोविन्द[1] कथ्यते बुधै ।
जावाल[1] स्त्वजजीविको[2], वर्करस्य च पालक ।।१४९५।।

## ❀ कृषिकनामानि ❀

कर्षक[1] कार्षकः[2] क्षेत्री[3], कृषिकः[4] कृषको[5] हली[6] ।
कृषीबल[7] कुटुम्बी[8] च, क्षेत्राजीवो[9] ऽपि कथ्यते ॥१४९६॥

## ❀ हलिनामानि ❀

जित्या[1] हलि[2] श्च नामाऽस्ति, महाहलं हि मन्यते ।
गोदारणं[1] हल[2] सीर[3], स्तथा लघुश्च लाङ्गलम् । १४९७॥

ईषा[1] नाम तथेषा[2] ऽपि, हलदण्डो हि कथ्यते ।
सीता[1] शीता[2] च क्षेत्रे हि, हलरेखा निगद्यते ॥१४९८॥

निरीशं[1] च निरीषं[2] वै, कुटकं[3] कूटकं[4] पुन ।
हलदण्ड विना मात्र, फालो यत्र च ध्रियते ॥१४९९॥

## ❀ फालनामानि ❀

कुशिकः[1] कृषक[2] फालः[3], फलं[4] क्षेत्रविदारकम् ।
दात्रं[1] तथा लवित्रं[2] तन्, मुष्टौ वण्ट[1] श्च मन्यते ॥१५००॥

मत्य[1] ख्यातं कृषेः कर्म्म-हलकृष्ट समीकृतौ ।
गोदारणं[1] श्च कुद्दाल[2], खनित्र[1] त्ववदारणम्[2] ॥१५०१॥

## ❀ प्रतोदनामानि ❀

प्रतोद[1] स्तोदनं[2] तोत्रं[3], प्रवयणं[4] च प्राजनम्[5] ।
पञ्चनामानि दण्डस्य, येन सञ्चाल्यते वृष ॥१५०२॥

## ※ योत्रनामानि ※

योत्र[1] ञ्च योक्त्र[2] माऽऽबन्ध[3], रज्जुचर्म-कृते भवेत् ।

## ※ लोष्ठभेदननामानि ※

कोटीश[1] कोटिश[2] श्चैव, लोष्ठभेदन[3] मत्र तु ॥१५०३॥

काष्ठस्य मुद्गरो नाम, कथ्यते लोष्ठभेदके ।
मेथि[1] र्मेधि:[2] खलेवाली[3], खलशङ्कु निगद्यते ॥१५०४॥

## ※ शूद्रनामानि ※

अन्त्यवर्ण[1] स्तथा शूद्र:[2], पद्य[3] पज्जो[4] जघन्यज[5] ।
वृषल[6] श्चेति नामानि, शूद्रस्य संभवन्ति वै ॥१५०५॥

## ※ विभिन्नशूद्रजातिनामानि ※

तेऽपि मूर्द्धावसिक्तादीरथकृन् मिश्रजातय: ।
क्षत्रियाया द्विजाज्जातो, मूर्धावसिक्त[1] उच्यते ॥१५०६॥

द्विजाद् वैश्यस्त्रियां जातो, ऽम्बष्ठो[2] हि कथ्यते पुन ।
पारशवो[3] निषाद श्च, जात: शूद्रस्त्रियां द्विजात् ॥१५०७॥

क्षत्राद् वैश्यस्त्रियां जातो, माहिष्यो[4] मन्यते स वै ।
उग्र[5] श्च कथ्यते क्षत्रा-दुत्पन्नो विट्स्त्रियां भुवि ॥१५०८॥

वैश्यात् शूद्रस्त्रियां जातो, करण[6] कथ्यते किल ।
आयोगवो[7] ऽपि जातो वै, शूद्राद् वैश्यस्त्रियां पुन: ॥१५०९॥

क्षत्ता[८] शूद्रात् प्रविज्ञेयो, जातो वै क्षत्रिय स्त्रियाम् ।
चण्डाल[९] कथ्यते शूद्राद्, जातो वै ब्राह्मण स्त्रियाम् ॥१५१०॥

मागध[१०] क्षत्रियायां वै, वैश्याद् जातो हि मन्यते ।
पुन वैदेहको[११] वैश्याद्, द्विजस्त्रियां हि कथ्यते ॥१५११॥

सूत[१२] स्तु क्षत्रियाज्जात, द्विजस्त्रियां हि मन्यते ।
इति च द्वादश भेदाः, कथ्यन्ते शूद्रकस्य वै ॥१५१२॥

माहिष्येण हि जात स्यात्, करण्यां रथकारकः[१] ।

## ❀ शिल्पिनामानि ❀

शिल्पी[१] च प्रकृति[२] कारी[३], कारु[४] श्चेत्यपि कथ्यते ॥१५१३॥

शिल्पिनां समुदायो ऽपि, श्रेणि[१] श्च मन्यते बुधैः ।

## ❀ शिल्पनामानि ❀

शिल्पं[१] कला[२] च विज्ञानं[३], नाम शिल्पस्य कथ्यते ॥१५१४॥

## ❀ मालाकारनामानि ❀

मालाकारो[१] मालिकश्च[२], पुष्पाजीवो[३] ऽपि मन्यते ।

## ❀ पुष्पलावीनाम ❀

प्रोक्तं नाम पुष्पलावी[१], पुष्पाणामवचायिनि ॥१५१५॥

## ❀ कल्यपालनामानि ❀

वारिवास[१] सुराजीवी[२], कल्यपाल[३] श्च शौण्डिक[४]।
तथा पानवणिक्[५] मण्ड-हारक[६] श्चाऽऽसुतीवल[७] ॥१५१६॥
कलालस्येति नामानि, प्रोक्तान्यथ ध्वजो[८] ध्वजी[९]।

## ❀ मदिरानामानि ❀

सुरा[१] स्वादुरसा[२] शुण्डा[३], परिस्रुत्[४] च परिस्रुता[५] ॥१५१७॥
देवसृष्टा[६] प्रसन्ना[७] च, गन्धोत्तमा[८] परिप्लुता[९]।
मार्द्वीक[१०] मदिरा[११] मद्य[१२],
मदिष्ठा[१३] मदना[१४] ऽब्धिजा[१५] ॥१५१८॥
कल्य[१६] कश्य[१७] च माध्वीक[१८],
कापिश[१९] कापिशायनम्[२०]।
कादम्बरी[२१] वारुणी[२२] हाला[२३],
हारहूर[२४] हलिप्रिया[२५] ॥१५१९॥
इरा[२६] मधु[२७] च मन्यन्ते, मद्यनामानि वै पुनः।
मध्वासवो[१] माधवको[२], मधुमिश्रसुरा भवेत् ॥१५२०॥
मौरादेशसमुत्पन्ना, मैरेयः[१] शीधु[२] रासव[३]।
जगलो[१] मेदक[२] श्चैव, मद्यपङ्क[३] सुरा भिद ॥१५२१॥
किण्वं[१] कण्व[२] मद्यबीजं[३], नग्नहु[४] श्चापि नग्नहूः[५]।
मद्यनिर्माण हेतूनां, बीजानां कथने भवेत् ॥१५२२॥

आसवो[1] ऽभिषवो[2] मद्य-सन्धान[3] माऽऽस्रुति[4] श्च वै ।
अर्कसम्पाद्नैः कार्यं, मद्यनिर्माणिका क्रिया ॥१५२३॥

मन्यते मद्यमण्ड[1] श्च, कारोत्तम[2] स्तथैव च ।
मद्यस्य स्वच्छभागो वै, पुन मद्यतरो भवेत् ॥१५२४॥

※ मद्यपात्रनामानि ※

अनुतर्ष[1] श्च गल्वर्क[2], चषक[3] श्चानुतर्षणम्[4] ।
कथ्यते सरक[5] श्चेति, मद्यपानस्य पात्रकम् ॥१५२५॥

मद्यपानमपि प्रोक्तं, सरक[1] श्चानुतर्षणम्[2] ।
शुण्डा[1] पानमदस्थानं[2], मद्यपानस्थलं भवेत् ॥१५२६॥

मधुक्रमाः[1] मधुवारा[2], मद्यपानस्य पद्धति ।
सहपान[1] सपीति[2] श्च, सहपानक्रिया विधौ ॥१५२७॥

आपानं[1] पानगोष्ठिका[2], समूहमद्यपस्थलम् ।
उपदंशो[1] ऽवदश[2] श्च, चक्षण[3] मद्यपाशनम्[4] ॥१५२८॥

भुङ्क्ते मदिरया सार्द्धं, तस्मिन् खाद्ये च मन्यते ।

※ स्वर्णकारनामानि ※

स्वर्णकार[1] कलाद[2] श्च, नाडिंधम[3] श्च मुष्टिक ॥१५२९॥

एतन्नामानि मन्यन्ते, स्वर्णकारस्य साक्षरैः ।
तैजसावर्त्तनी[1] मूषा[2], मूषायाः नाम वर्त्तते ॥१५३०॥

चर्मप्रसेविका[1] भस्त्रा[2], प्रोक्त श्चर्मप्रसेवकः[3] ।
आस्फोटनी[1] वेधनिका[2], मौक्तिक छेदशस्त्रकम् ॥१५३१॥

निकष[1] स्तु कषः[1] शाणः[2], कषपाषाण उच्यते ।
कङ्कमुख[1] श्च संदशः[2], संदशस्य हि कथ्यते ॥१५३२॥

यन्त्रकं[1] च भ्रम[2] कुन्द[3], मद्यभ्रामकयन्त्रकम् ।

❀ मणिकारनाम ❀

प्रोक्तं नाममणिकारो[1], वैकटिको[2] ऽपि कथ्यते ॥१५३३॥

❀ शौल्विकनाम ❀

शौल्विक[1] स्ताम्रकुट्टको[2], मन्यते शौल्विकस्य हि ।

❀ शाङ्खिकनाम ❀

काम्बविक[1] श्च शाङ्खिक[2], कथ्यते शाङ्खिकस्य वै ॥१५३४॥

❀ सौचिकनाम ❀

सौचिक[1] स्तुन्नवाय[2] श्च, नामोक्तं सौचिकस्य हि ।

❀ कर्त्तरीनामानि ❀

कर्त्तरी[1] कर्त्तरि[2] श्चैव, कृपाणी[3] कल्पनी[4] पुनः ॥१५३५॥
वस्त्रादि कर्त्तनं कर्तुं, शस्त्रं लोहकृतं भवेत् ।

❀ सूचीनामानि ❀

सूची[1] सूचि[2] श्च सेवनी[3], वस्त्र येन च सीव्यति ॥१५३६॥

❀ सूचिसूत्रनाम ❀

पिप्पलक[1] सूचिसूत्र[2], सूचिसूत्रस्य नाम वै ।

❀ कर्त्तनसाधननाम ❀

कर्त्तनसाधनं[1] तर्कु[2], स च त्रागो हि कथ्यते ॥१५३७॥

❀ पिञ्जननामानि ❀

तुलस्फोटनकार्मुक[1], विहननं[2] च पिञ्जनम्[3] ।

एतन्नामानि कथ्यन्ते, यन्त्रके पिञ्जनस्य वै ॥१५३८॥

❀ सीवननामानि ❀

सीवनं[1] सेवनं[2] स्यूतिः[3], सूचीकारस्य कर्माणि ।

❀ स्यूतनाम ❀

स्यूत[1] प्रसेवक[2] श्चैव, स्यूतं वस्त्रादि कथ्यते ॥१५३९॥

❀ तन्तुवायनामानि ❀

तन्तुवाय[1] कुविन्द[2] श्च, तन्त्रवायो[3] ऽपि मन्यते ।

त्रसरः[1] सूत्रवेष्टनं[2], वानस्य साधनं भवेत् ॥१५४०॥

व्यूति[1] र्वाणि[2] स्तथा वान[3], चेति वानस्य कथ्यते ।
वानदण्डो[1] वापदण्डो[2], वेमो[3] वेमा[4] च मन्यते ॥१५४१॥

सूत्राणि[1] तन्तव[2] श्चैव, सूत्रसंज्ञा द्वय भवेत् ।

## ❀ रजकनामानि ❀

निर्णेजक[1] श्च धावको[2], रजको[3] वस्त्रशुद्धिकृत् ॥१५४२॥

## ❀ चर्मकारनामानि ❀

चर्मकृत्[1] पादुकाकृत्[2] च, कथ्यते चर्मकारक: ।

## ❀ पादुकानामानि ❀

उपानत्[1] पादपीठी[2] च, पादवीथी[3] पदत्वरा[4] ॥१५४३॥

पादरथी[5] च पन्नद्धा[6], पादुका[7] पादरक्षणम्[8] ।
पेशी[9] प्राणहिता[10] पादू:[11],
पदायता[12] पदायिका[13] ॥१५४४॥

पादत्राण[14] च कथ्यन्ते, नामानि पादजङ्घु[15] च ।

## ❀ पादुकाविशेषनाम ❀

पुन श्चाऽनुपदीना[1] ऽबद्धा, ऽनुपदं मन्यते बुधै: ॥१५४५॥

## ❀ वरत्रानामानि ❀

नद्ध्री[1] वद्ध्री[2] वरत्रा[3] च, चर्मकृत् पादु सूत्रकम् ।

## ❀ आरानामानि ❀

चर्मछिच्छ्रमाऽऽरा[1] स्यात्, तथा चर्मप्रभेदिका[2] ॥१५४६॥
चर्मसीवनी[3] सैवाऽस्ति, येन चर्मादि छिद्यते ।

## ❀ कुम्भकारनामानि ❀

दण्डभृत्[1] कुम्भकार[2] श्च, कुलाल[3] श्चक्रजीवक.[4] ॥१५४७॥

## ❀ शस्त्रघर्षकनामानि ❀

शस्त्रमार्जो[1] भ्रमासक्तः[2], शाणाजीवो[3] ऽसिधावक.[4] ।

## ❀ तैलिकनामानि ❀

चाक्रिक[1] स्तैलिक[2] स्तैली[3], तिलंतुद[4] श्च धूसरः[5] ॥१५४८॥

## ❀ खलनाम ❀

पिण्याक[1] श्च खलो[2] नाम, तिलादि नामसार भाक् ।

## ❀ रथकारनामानि ❀

रथकृत्[1] रथकार[2] श्च, तक्षा[3] त्वष्टा[4] च वर्द्धकि[5] ॥१५४९॥
काष्ठतट्[6] रथपति[7] श्चेति, सर्वं नामानि वर्द्धके ।
ग्रामतक्षः[1] पुन र्नाम, ग्रामायत्तो हि मन्यते ॥१५५०॥

कथ्यते कीटतक्षो[1] ऽपि, स्वतन्त्रो वर्द्धकि. पुन ।

❀ वासीनामानि ❀

तक्षणी[1] वृक्षभिद्[2] वासी[3], तस्यास्त्र येन छिद्यते ।।१५५१।।

❀ क्रकचनाम ❀

क्रकच[1] करपत्रकं[2], काष्ठादे स्तु विदारके ।

❀ उद्घननाम ❀

निक्षिप्य तक्ष्यते काष्ठ, यत्र काष्ठे स उद्घन.[1] ।।१५५२।।

❀ वृक्षादननाम ❀

वृक्षभेदी[1] वृक्षादनः[2], स्यात् कुठारस्य नाम वै ।

❀ टङ्कनाम ❀

पाषाणत्रोटक वस्तु, टङ्कः[1] पाषाणदारकः[2] ।।१५५३।।

❀ लोहकारनामानि ❀

कर्मारो[1] लोहकार[2] श्च, व्योकारो[3] लोहकर्मकृत् ।

❀ अयोघननाम ❀

कूट[1] मऽयोघनो[2] नाम, लोहमुद्गरकस्य वै ।।१५५४।।

❀ व्रश्चननाम ❀

व्रश्चन.[1] पत्रपरशु,[2] र्नामोक्तं व्रश्चनस्य वै ।

❀ तूलिकानामानि ❀

काष्ठ-लौह शालाकास्या दोषीका[1] तूलिके[2]-षिका[3] ॥१५५५॥

❀ कान्दविकनाम ❀

कथ्यते भक्ष्यकारो[1] हि, कान्दविको[2] बुधैर्जनैः ।

❀ कन्दुनाम ❀

कन्दुः[1] स्वेदनिका[2] चैव, लौहभाजन मुच्यते ॥१५५६॥

❀ चित्रकारनामानि ❀

तौलिकिको[1] रङ्गाजीव[2] श्चित्रकार[3] चित्रकृत्[4]
नामान्येतानि कथ्यन्ते. चित्रकारस्य कोविदैः ॥१५५७॥

❀ कूचिकानाम ❀

कूचिका[1] तूलिका[2] चैवं, चित्रकारस्य साधनम् ।

❀ चित्रनाम ❀

आलेख्यं[1] चापि चित्रं[2]-वै, चित्रस्य नाम मन्यते ॥१५५८॥

## ❀ लेपकनामानि ❀

लेप्यकृत्[1] लेपको[2] नाम, पलगण्डो[3] ऽपि कथ्यते ।

## ❀ पुस्तनाम ❀

लेप्यादि कर्म पुस्त[1] स्यात्, खेलनार्थं मुदा कृतम् ॥१५५९॥

## ❀ नापितनामानि ❀

नापितो[1] ऽन्तावसायी[2] च, भण्डिवाह[3] श्च भाण्डिकः[4] ।
भण्डिवाही[5] दिवाकीर्तिः[6], ग्रामणी[7] श्चण्डिल[8]पुन ॥१५६०॥

क्षुरी[9] च क्षुरमर्दी[10] च, क्षौरिको[11] मुण्डक[12] स्तथा ।
नामान्येतानि कथ्यन्ते, नापितस्य हि पण्डितैः ॥१५६१॥

## ❀ मुण्डननामानि ❀

मुण्डन[1] वपनं[2] क्षौर[3], भद्राकरण[4] मित्यपि ।
परिवापणं[5] संप्रोक्तं, केशच्छेदन कर्म्मणि ॥१५६२॥

## ❀ नाराचीनाम ❀

नाराची[1] चैषणी[2] नाम, व्रणशोधकशस्त्रके ।

## ❀ देवलनाम ❀

देवाजीवो[1], देवलश्च[2], कथ्यते देवपूजकः ॥१५६३॥

❀ मादङ्गिक नाम ❀

मौर्रजिको[1] मार्दङ्गिक[2], श्चोक्तो मृदङ्गवादकः ।

❀ वैणिकनाम ❀

वीणायाः वादक. प्रोक्तो, वीणावाद[3] श्च वैणिक[4] ॥१५६४॥

❀ वाशिकनामानि ❀

वणविक[1] श्च वेणुध्मो[2], वांशिको[3] वेणुवादक. ।

❀ पाणिवादकनाम ❀

ताल ददाति हस्ताभ्यां, पाणिघः[1] पाणिवादकः[2] ॥१५६५॥

❀ इन्द्रजालिकनाम ❀

स्यात् प्रातिहारिको[1] माया-कार[2] श्चैवेन्द्रजालिक. ।

❀ मायानाम ❀

इन्द्रजालादि विद्याया, नाम माया[1] च शाम्बरी[2] ॥१५६६॥

❀ इन्द्रजालनामानि ❀

इन्द्रजालं[1] तथा जाल[2], कुहक[3] कुहुक[4] पुनः ।
कुसृति[5] श्चेति नामानि, कथ्यन्ते कुहुकस्य वै ॥१५६७॥

## ❀ कौतुकनामानि ❀

कौतूहल[1] च कौतुकं[2], कुतुक[3] ञ्च कुतूहलम्[4] ।
विनोद[5] श्चेति नामानि, कथ्यन्ते कौतुकस्य वै ॥१५६८॥

## ❀ व्याधनामानि ❀

व्याधो[1] मृगवधाजीवी[2], मृगयु[3] र्लुब्धक:[4] पुन: ।
नामान्येतानि चत्वारि, मन्यन्ते लुब्धकस्य वै ॥१५६९॥

## ❀ पापर्द्धिनामानि ❀

आच्छोदनं[1] तथाऽऽखेटो[2], मृगव्य[3] मृगया[4] पुन: ।
पापर्द्धि[5] श्चेति नामानि, कथ्यन्ते पण्डितै र्जनै ॥१५७०॥

## ❀ जालिकनाम ❀

वागुरिक[1] श्च जालिको[2], जालेन मृगहन्तरि ।

## ❀ मृगजालिकानाम ❀

वागुरा[1] मृगजालिका[2], मृगजालस्य नाम स्यात् ॥१५७१॥

## ❀ रज्जुनामानि ❀

गुणो[1] रज्जु[2] स्तथा शुम्बं[3], शुल्वं[4] वटारको[5] वटी[6] ।
तन्त्री[7] तन्त्रि[8] श्च नामानि, मन्यन्ते रज्जु वस्तुन: ॥१५७२॥

## ❀ कैवर्त्तनामानि ❀

कैवर्त्तो[1] धीवरो[2] दाशो[3], मत्स्यग्राही भवेत् पुनः ।

## ❀ मत्स्यवेधननामानि ❀

वडिशं[1] बडिश[2] चैव, मत्स्यवेधन[3] मित्यपि ॥१५७३॥
मत्स्यवेधक लौहास्त्र, कथ्यतेऽत्र सदा जनैः ।

## ❀ मत्स्यजालनाम ❀

आनायो[1] मत्स्यजाल[2] ञ्च, मत्स्यानां ग्राहको भवेत् ॥१५७४॥

## ❀ मत्स्यबन्धनीनाम ❀

गृहीत मत्स्यपात्रन्तु, कुवेणी[1] मत्स्यबन्धनी[2] ।

## ❀ शाकुनिकनाम ❀

पक्षिणां घातक प्रोक्तः शाकुनिको[1] जीवान्तकः[2] ॥१५७५॥

## ❀ मांसिकनामानि ❀

कौटिकः[1] खट्टिक[2] श्चैव, वैतंसिक[3] श्च मांसिकः[4] ।
सौनिक[5] श्चेति नामानि, मन्यन्ते मांसिकस्य वै ॥१५७६॥

सूना[1] पशुवधस्थानं, पशुबन्धनसाधनम् ।
वीतंस[1] श्च वितंसो[2] वै, कथ्यते विबुधै रिह ॥१५७७॥

### ❀ पाशनाम ❀

पाशो[1] बन्धनग्रन्थि[2] श्च, मृगादिबन्धसाधनम् ।

### ❀ अवटनाम ❀

अवट[1] ह्यवपात[2] श्च, मृगादि पातखातकम् ॥१५७८॥

### ❀ कूटयन्त्रनाम ❀

उन्माथः[1] कूटयन्त्र[2] च पाशयन्त्र[3] पुनः खलु ।
नामान्येतानि कथ्यन्ते, पश्वादेर्ग्रहणे सदा ॥१५७९॥

### ❀ नीचनामानि ❀

इतरः[1] पामरो[2] नीच[3], प्राकृत[4] श्च पृथग्जनः[5] ।
विवर्णो[6] बर्बर[7] श्चेति, नामानि विलसन्ति वै ॥१५८०॥

### ❀ चण्डालनामानि ❀

चण्डाल[1] श्चैव चाण्डालः[2], श्वपच[3] पुक्कसः[4] प्लवः[5] ।
पुष्कसो[6] बुक्कस[7] श्चापि, निषाद[8] श्च जनङ्गमः[9] ॥१५८१॥

मातङ्गो[10] ऽन्तावसायी[11] वै, दिवाकीर्ति[12] पुनः किल ।
अन्तेवासी[13] ति नामानि, मन्यन्ते पण्डितैर्जनैः ॥१५८२॥

डोम्ब[1] श्च श्वपचो[2] नाम, डोम्बजाते हि कथ्यते ।
बुक्कसो[1] मृतपः[2] प्रोक्तः श्मशानकार्यकारकः ॥१५८३॥

## * म्लेच्छजातिनामानि *

माला[१] भिल्ला[२] पुलिन्दा[३] श्च किराता.[४] बकटा[५] भटा[६] ।
शबरा:[७] नाहला[८] निष्ट्या, इत्येत्युक्ता म्लेच्छजातयः ॥१५८४॥

इति श्रीतपोगच्छाधिपति - सूरिचक्रचक्रवर्त्ति - भारतीयभव्यविभूति-चिरतनयुगप्रधानकल्प-सर्वतन्त्रस्वतन्त्र-श्रीकदम्बगिरि प्रमुखानेक- प्राचीन तीर्थोद्धारक-पञ्चप्रस्थानमयसूरिमन्त्रसमाराधक-शासन-सम्राट - जगद्गुरु-भट्टारकाचार्य महाराजाधिराज - श्रीमद्विजय - नेमिसूरीश्वर - सुप्रसिद्ध पट्टालङ्कार - व्याकरणवाचस्पति-शास्त्र-विशारद-कविरत्न-साहित्यसम्राट्-साधिकसप्तलक्षश्लोक प्रमाण नूतन संस्कृत साहित्यसर्जक - परमशासन प्रभावकाचार्य देवेश - श्रीमद्विजयलावण्यसूरीश्वर- पट्टधर-व्याकरणरत्न-शास्त्रविशारद-कविदिवाकर-देशनादक्ष - शासनप्रभावकाचार्यदेव - श्रीमद् विजयदक्षसूरीश्वर - पट्टधर-साहित्यरत्न-शास्त्रविशारद-कविभूषण-पञ्च-प्रस्थानमयसूरिमन्त्रसमाराधक-शासनप्रभावकाचार्य श्रीमद् विजयसुशील सूरिणा विरचिताया सुशीलनाममालायां तृतीयो मर्त्यविभागः समाप्त ॥३॥

## ॥ चतुर्थस्तिर्यग्विभागः ॥

### तत्र

### * पृथ्वीकायनामानि *

विश्वा[1] विश्वम्भरा[2] भूमि[3], वसुमती[4] वसुन्धरा[5] ।
उर्वी[6] धात्री[7] धरित्री[8] च, धरणी[9] धरणि[10] धरा[11] ॥१५८५॥

स्थिरा[12] क्ष्मा[13] च क्षमा[14] क्षान्ता[15],
क्षोणी[16] क्षोणि[17] क्षिति[18] मही[19] ।
मेदिनी[20] पृथिवी[21] पृथ्वी[22],
काश्यपी[23] कु[24] श्च केलिनी[25] ॥१५८६॥

भूतधात्री[26] घनश्रेणी[27], मौलि[28] र्मेर्वद्रिकर्णिका[29] ।
मध्यलोका[30]महाकान्ता[31],रत्नगर्भा[32]ऽचला[33]रसा[34] ॥१५८७॥

सागरमेखला[35] ज्या[36] वै, वसुधा[37] सागराम्बरा[38] ।
समुद्रवसना[39] भू[40] श्च, समुद्ररशना[41] तथा ॥१५८८॥

गोत्रा[42] सागरनेमी[43] च, गोत्रकीला[44] जगद्वहा[45] ।
अवनि[46] श्चावनी[47] गो[48],
गौः[49] बीजसू[50] रत्नसू[51] स्तथा ॥१५८९॥

रत्नवती[52] महास्थाली[53], जगती[54] चाम्बरस्थली[55] ।
विपुला[56] पर्वताधारा[57] गन्धमाता[58] च देहिनी[59] ॥१५९०॥

इला[६०] समुद्रकाञ्चि[६१] श्चा, ऽनन्ता[६२] सर्वंसहा[६३] तथा ।
नामान्येतानि सर्वाणि, कथ्यन्ते विबुधै क्षिते ॥१५६१॥

## * स्वर्गभूम्योर्नामानि *

द्यावापृथिव्यौ[१] रोदस्यौ[२], द्यावाभूमी[३] च रोदसी[४] ।
तथा दिवस्पृथिव्यौ[५] वै, द्यावाक्षमे[६] च रोदसी[७] ॥१५६२॥

दिवः पृथिव्यौ[८] नामापि, स्वर्गभूम्यो हि कथ्यते ।

## * भूविशेषनामानि *

उर्वरा[१] सर्वसस्या क्ष्मा, विश्वे हि मन्यते जनै ॥१५६३॥

इरिणं[१] चोषरं[२] नाम, प्रोक्त मूषरभूषु वै ।
स्थल[१] स्थली[२] च सा भूमि, जलं यत्र न तिष्ठति ॥१५६४॥

स्थला[१] कृत्रिमभूमि स्यात्, मरु[१] र्धन्वा[२] जल विना ।
अप्रहत[१] खिल[२] क्षेत्रं, कृतं यत्र न कर्षणम् ॥१५६५॥

## * मृत्तिकानामानि *

मृद्[१] मृत्तिका[२] च सामान्या, क्षारा भूमि रुष[१] स्मृत ।
मृत्सा[१] मृत्स्ना[२] च सा ख्याता यत्र मृच्छोभना भवेत् ॥१५६६॥

## * लवणनामानि *

रुमा[१] लवणखानि[२] स्यात्, सामुद्रं[३] लवणं[२] पुन ।
वशिरो[३] ऽक्षीव[४] माख्यातं, सामुद्रे लवणे सदा ॥१५६७॥

## ❀ सैन्धवनामानि ❀

सैन्धवं[1] माणिबन्धं[2] च, माणिमन्थं[3] च सिन्धुजम्[4] ।
माणिमन्तं[5] तथा शीत-शिवं[3] चोक्तं नदीभवम्[7] ॥१५९८॥

## ❀ वसुकलवणनामानि ❀

रौमक[1] ञ्च रुमाभवं[2], वसूकं[3] वसुकं[4] वसु[5] ।

## ❀ विडलवणनामानि ❀

पाक्य[1] विड[2] विडं[3] पक्क-लवण कृत्रिमं भवेत् ॥१५९९॥

## ❀ सौवर्चलनामानि ❀

सौवर्चले[1] ऽक्ष[2] दुर्गन्ध[3], रुचक[4] ञ्च शूलनाशनम्[5] ।
प्रोक्त तु तिलक[1] नाम, निर्गन्धं कृष्णवर्णकम् ॥१६००॥

## ❀ यवक्षारनामानि ❀

यवाग्रजो[1] यवक्षारः[2], पाक्य[3] श्च यवनालजः[4] ।
नामान्येतानि मन्यन्ते, यवक्षारस्य साक्षरैः ॥१६०१॥

## ❀ टङ्कणनामानि ❀

टङ्कण[1] स्टङ्कनो[2] लोह-श्लेषणो[3] रसशोधनः[4] ।
मालतीतीरज[5] श्चैव, प्रोक्तः पाचनकः[6] पुनः ॥१६०२॥

❀ स्वर्जिकाक्षारनामानि ❀

कापोत.[1] स्वर्जिकाक्षार[2], सृजिकाक्षार[3] इत्यपि ।
सुखवर्चक[4] श्च लोके, साजी सज्जीति वा भवेत् ॥१६०३॥

❀ स्वर्जिकानामानि ❀

स्वर्जिका[1] स्वर्जि[2] श्च स्त्रुग्घ्नी[3], योगवाही[4] सुर्वचिका[5] ।
लवणस्यैव भेदा स्यु, र्गुण रूप विभागत ॥१६०४॥

❀ भरतादिक्षेत्रनामानि ❀

*भरता[1] न्यैरावतानि[2], विदेहा[3] श्च विना कुरून्[4] ।
क्षेत्राणि कर्मभूम्य[1] स्यु, पञ्चदशैव नामत ॥१६०५॥

शेषाणि सर्ववर्षाणि, मन्यन्ते फलभूमय[1] ।
तन्नामानि कथ्यन्ते, त्रिश सख्यानि चात्र हि ॥१६०६॥

हैमवतानि पञ्च स्यु, हरिवर्षाणि पञ्च च ।
रम्यकाण्यपि पञ्चैव, हैरण्यवतान्येव हि ॥१६०७॥

देवकुरववर्षाणि, पञ्च सख्यानि तानि वै ।
उत्तरकुरव श्चापि पञ्च,-संख्यका सन्ति नामत: ॥१६०८॥

---

*'पञ्च भरतक्षेत्राणि' यथा—

'जम्बूद्वीपे भरतक्षेत्रमेकमेव, घातकीखण्डे भरतक्षेत्र द्वयमेव पुष्कर-वरद्वीपार्धेऽपि च भरतक्षेत्र द्वयमेव वर्त्तते ।

## ❀ देशनामानि ❀

वर्षं[1] वर्षधराद्यङ्कं[2], क्षेत्रसज्ञा निगद्यते ।
देशो[1] जनपदो[2] राष्ट्रं[3], नीवृत्[4] निर्ग[5] इच मण्डलम् ॥१६०९॥

---

'पञ्चैरावतक्षेत्राणि' यथा—
जम्बूद्वीपे ऐरावतक्षेत्रमेकमेव, धातकीखण्डे ऐरावतक्षेत्रं द्वयमेव, पुष्करवरद्वीपार्धेऽपि चैरावतक्षत्र द्वयमेव वर्तते ।

'पञ्चमहाविदेहक्षेत्राणि' यथा—
जम्बूद्वीपे महाविदेहक्षेत्रमेकमेव, धातकीखण्डे महाविदेहक्षेत्रं द्वयमेव, पुष्करवरद्वीपार्धे ऽपि च महाविदेहक्षेत्र द्वयमेव वर्तते ।
तानि सर्वाणि मिलित्वा पञ्चदश क्षेत्राणि कर्मभूम्यां वर्तन्ते ॥

'पञ्च हैमवतक्षेत्राणि' यथा—
जम्बूद्वीपे हैमवतक्षेत्रमेकमेव, धातकीखण्डे हैमवतक्षेत्रं द्वयमेव, पुष्करवरद्वीपार्द्धेऽपि च हैमवतक्षेत्र द्वयमेव वर्तते ।

'पञ्च हरिवर्षक्षेत्राणि' यथा—
जम्बूद्वीपे हरिवर्षक्षेत्रमेकमेव, धातकीखण्डे हरिवर्षक्षेत्र द्वयमेव, पुष्करवरद्वीपार्द्धेऽपि च हरिवर्षक्षेत्र द्वयमेव वर्तते ।

'पञ्च रम्यकक्षेत्राणि' तद्यथा—
जम्बूद्वीपे रम्यकक्षेत्रमेकमेव, धातकीखण्डे रम्यकक्षेत्रं द्वयमेव, पुष्करवरद्वीपार्द्धेऽपि च रम्यकक्षेत्र द्वयमेव वर्तते ।

तथोपावर्त्तनं[७] चापि, विषय[८] श्चोपवर्त्तनम्[९] ।
नामान्येतानि मन्यन्ते, देशस्य विबुधै र्भुवि ॥१६१०॥

आर्यावर्त्त[१] स्तथाऽऽचार-वेदी[२] च पुण्यभूः पुनः ।
जिनचक्रयर्द्धचक्रियां, जन्मभूमि र्हि मन्यते ॥१६११॥

विन्ध्यहिमागयो र्मध्य-प्रदेशो कथ्यते स च ।
पूर्व-पश्चिमयो सिन्धो, र्मध्यभागोऽपि मन्यते ॥१६१२॥

---

'पञ्च हैरण्यवतक्षेत्राणि' यथा—

जम्बूद्वीपे हैरण्यवतक्षेत्रमेकमेव, धातकीखण्डे हैरण्यवतक्षेत्रं द्वयमेव, पुष्करवरद्वीपार्द्धेऽपि च हैरण्यवतक्षेत्रं द्वयमेव वर्तते ।

'पञ्च देवकुरुक्षेत्राणि' यथा—

जम्बूद्वीपे देवकुरुक्षेत्रमेकमेव, धातकीखण्डे देवकुरुक्षेत्र द्वयमेव, पुष्करवरद्वीपार्द्धेऽपि च देवकुरुक्षेत्र द्वयमेव वर्तते।

'पञ्चोत्तरकुरुक्षेत्राणि' यथा—

जम्बूद्वीपे उत्तरकुरुक्षेत्र मेकमेव, धातकीखण्डे उत्तरकुरुक्षेत्र द्वयमेव, पुष्करवरद्वीपार्द्धेऽपि च उत्तरकुरुक्षेत्र द्वयमेव वर्तते ।
तानि मिलित्वा त्रिंशत्क्षेत्राणि वर्त्तन्तेऽकर्मकभूम्याम् । तत्र युगलिक-मनुष्या निवसन्ति ॥

[इति जिनागमेऽपिकथितम्]

प्रयागाद् हरद्वारान्त-गङ्गायमुनयो खलु ।
प्रोक्तं मध्यप्रदेश तद्, चाऽन्तर्वेदि[1] समस्थली[2] ॥१६१३॥

ब्रह्मावर्त्त[1] इद नाम, प्रख्यात सर्वदा किल ।
सरस्वत्या दृषद्वत्या, मध्यभागे बुधै रिह ॥१६१४॥

विख्यातो ब्रह्मवेदि[1] स्तु, पञ्चरामहृदस्य वै ।
मध्यभागो कुरुक्षेत्रे भूगोलस्य कोविदै ॥१६१५॥

धर्मक्षेत्र[1] प्रसिद्ध यत कुरुक्षेत्र[2] तदेव हि ।
निश्चित कुरुक्षेत्रस्य, द्वादशयोजनावधि ॥१६१६॥

हिमवद् विन्ध्ययो र्मध्य, यत् प्राग् विनशनादपि ।
प्रत्यगेव प्रयागा च्च, मध्यदेश[1] स मध्यम.[2] ॥१६१७॥

प्राच्य[1] प्राग्दक्षिणो देशो, नदी यावच्छरावतीम् ।
उदीच्यः[1] कथ्यते विज्ञैः, देशो हि पश्चिमोत्तरः ॥१६१८॥

प्रोक्तो म्लेच्छस्य देशो हि, प्रत्यन्तो[1] म्लेच्छमण्डल[2] ।
श्वेतमृत्तिकवान् देशः, पाण्डुमृत्तिक[1] उच्यते ॥१६१९॥

पाण्डुभूमः[2] स एवास्ति, देशोऽय शुभदः सदा ।
उदग्भूम[1] श्च प्रख्यात, उदङ्मृत्तिकं[2] उच्यते ॥१६२०॥

कृष्णभूमिवान् देश , कृष्णमृत्तिक[1] उच्यते ।
कृष्णभूम स एवात्र, कथ्यते कोविदै किल ॥१६२१॥

जङ्गलो[1] जाङ्गलो[2] देशो, जलं विना च निर्जलः[3] ।
अनूप[1] श्चाऽम्बुमान्[2] देश, स स्याद् यत्र जलं बहु ॥१६२२॥

प्रोक्तः पुन जलप्राय, -देशः कच्छो[1]ऽपि तद्विध ।
कुमुद्वान्[1] कुमुदावास.[2], कुमुद्वान् देश उच्यते ॥१६२३॥

प्रदेशो बहु वेतस्वान्, वेतस्वान्[1] भूरिवेतस[2] ।
नड्वान्[1] तु नडकीय[2] श्च, नडप्राय[3] श्च नड्वल[4] ॥१६२४॥

नलतृणाधिके देशे, सर्वमेतत्प्रयुज्यते ।
शाड्वलः[1] शाद्वल[2] श्चैव, शादहरित[3] इत्यपि ॥१६२५॥

हरिततृणवान् देशः प्रोक्तः प्रायेण पण्डितै ।
नद्यम्बुजीवनो[1] देशो, नदीमातृक[2] इत्यपि ॥१६२६॥

वर्षाभि र्जीवनं यत्र, स देशो देवमातृक[1] ।
तत्रैवार्थे बुधैरत्र, वृष्टिजीवन[2] उच्यते ॥१६२७॥

प्रदेशः कामरूपा[1] वै, तथा प्राग्ज्योतिषाः[2] पुनः ।
अवन्तयश्च विख्याताः, मालवा[2] अपिसर्वत ॥१६२८॥

त्रिपुराः[1] डाहला[2] श्चैद्या[3], चेदय[4] पूर्वभारते ।
वङ्गा[1] श्च हरिकेलियाः[2], प्रोक्ता बङ्गाल नामनि ॥१६२९॥

चम्पोपलक्षिता अङ्गाः[1], उक्ता बिहारदेशके ।
साल्वा[1] श्च कारकुक्षीयाः[2], साल्वदेशे हि कथ्यते ॥१६३०॥

मरुदेशा हि विज्ञेयाः, मरव[1] श्च दशेरका[2] ।
जालन्धरा[1] स्त्रिगर्त्ता स्यु, र्लहोरस्यैक देशकाः ॥१६३१॥

तायिका[1] स्तर्जिका[2] देशा, स्तर्जिकस्य समीपत. ।
सारस्वता[1] श्च कश्मीरा[2], विर्काणका[3] श्च नाम वै ॥१६३२॥

माधुमताः[4] पुनर्नाम, काश्मीरस्य चतुष्टयम् ।
टक्का[1] स्तथैव वाहीका[2], प्रोक्ता वाहीक देशका· ॥१६३३॥

वाह्लीका[1] वाह्लिका[2] ख्याता, अरबस्तानदेशका. ।
तुरुष्का[1] साखय[2] श्चोक्ता, तुर्कस्तानप्रदेशका ॥१६३४॥

वृहद्गृहा[1] श्च कारूषा[2], उक्ता कारूषदेशका· ।
लम्पाका[1] श्च मुरुण्डाः[2] हि, लम्पाकदेशका सदा ॥१६३५॥

कुमालका[1] श्च सौवीराः[2], प्रोक्ता सौवीरदेशकाः ।
प्रत्यग्रथा[1] अहिच्छत्रा[2], श्चा ऽहिच्छत्रप्रदेशका. ॥१६३६॥

कीकटा[1] मगधा[2] प्रोक्ता, ख्याता मगधदेशका ।
ओण्ड्रा[1]श्च केरला[2] उक्ता, देश केरल नामनि. ॥१६३७॥

नामस्यात् कुन्तलेदेशे, कुन्तला[1] उपहालका[2] ।
एतानि देशनामानि, बहुवचने प्रयुज्यते ॥१६३८॥

❀ ग्रामनामानि ❀

ग्राम[1] सवसथ[2] श्चापि, स्यात् प्रतिवसथ[3] स्तथा ।
पर्युपवसथौ[4-5] प्रोक्तौ, निवसथ[6] श्च निगद्यते ॥१६३९॥

### ❀ पाटकनाम ❀

ग्रामस्यार्द्धविभागो वै, पाटक[1] कथ्यते जनै ।

### ❀ सीमानामानि ❀

आघाटो[1] ऽन्तो[2] ऽवसानं[3] च, मर्यादा[4] चाऽवधि[5] र्घटः[6] ॥१६४०॥

सीमा[7] सीमा[8] च नामानि, मन्यते पण्डितोजनः ।
ख्याता ग्रामस्य मर्यादा, ग्रामसीमा[1] जनै सदा ॥१६४१॥

उपशल्यं[2] पदं चापि- तस्यैवार्थस्यवाचकम् ।
माल[1] श्च मालकं[2] प्रोक्त, ग्राममध्यस्थितं वनम् ॥१६४२॥

परिसरः[1] पर्यन्तभूः[2], ग्रामान्तस्थल मुच्यते ।
कर्मान्तः[1] कर्मभू[2] शब्दऽकृष्टक्षेत्रस्य नाम वै ॥१६४३॥

### ❀ गोष्ठनाम ❀

गोस्थानं[1] स्यात् तथा गोष्ठं[2], गौष्ठीन[1] भूतपूर्वकम् ।
आशितंगवीन[1] प्रोक्तं, गावो यत्राशिताः पुरा ॥१६४४॥

### ❀ क्षेत्रनामानि ❀

क्षेत्रं[1] वप्र[2] श्च केदार[3], श्चोक्तं क्षेत्रस्य नाम वै ।

### ❀ सेतुनामानि ❀

आलि[1] श्चाली[2] तथा पालि[3], पाली[4] सेतु[5] श्च सवरः[6] ॥१६४५॥

## ❀ विशेषक्षेत्रनामानि ❀

विज्ञेयं शाकशाकिनं[1], शाकशाकट[2] मित्यपि ।
उत्पाद्यन्ते यत्र शाका स्तस्य नाम द्वयमिदम् ॥१६४६॥

वैहेय चापि शालेयं[2], कथ्यते व्रीहिक्षेत्रकम् ।
षष्टिक्य[1] षष्टिकस्यं, क्षेत्रमेव हि मन्यते ॥१६४७॥

प्रख्यातं कौद्रवीण[1] तद्, कोद्रवक्षेत्रमेवतु ।
मौद्गीन[1] चापि क्षेत्रं, मुद्गस्य मन्यते खलु ॥१६४८॥

अणव्य[1] चाऽऽणवीनं[2] च चीनकस्य हि क्षेत्रकम् ।
पुन: भङ्गच[1] च भाङ्गीनं[2], क्षेत्रं शणस्य कथ्यते ॥१६४९॥

औमीनं[1] चोक्त मुम्य वै, क्षुमाया क्षेत्रकं भुवि ।
यवक्य[1] चैव यव्य[2] तत्, क्षेत्रं यवस्य मन्यते ॥१६५०॥

तैलीन[1] चापि तिल्य[2] तत्, क्षेत्र तिलस्य कथ्यते ।
माषीण[1] चैव माष्य[2] तत्, क्षेत्र माषस्य मन्यते ॥१६५१॥

कर्ष्टुं योग्यं क्षेत्रमस्ति, सीत्य[1] हल्य[2] च नामत ।
त्रिहल्य[1] चापि त्रिसीत्य[2], तदेव त्रिगुणाकृतम्[3] ॥१६५२॥

तृतीयाकृत[4] तत्क्षेत्रे, त्रि कृते हलकर्षणे ।
द्विगुणाकृत[1] द्विहल्य[2], शम्बाकृत[3] सम्बाकृतम्[4] ॥१६५३॥

द्वितीयाकृत[5] द्विसीत्य[6], द्विवार यत्र कर्षणम् ।
उप्तकृष्ट[1] बीजाकृत[2], यत्राद्यवप्य कर्षणम् ॥१६५४॥

द्रौणिको[1] द्रोणवाप[2] श्च, यत्र द्रोणमित वपेत् ।
द्रौणिका[1] ऽऽढकिका[1] नाम, पात्रस्यापि भवेत् पुन. ॥१६५५॥

द्वितीयं नाम विद्वद्भि, राढकवाप[2] उच्यते ।
खारीक[1] स्तस्य नामास्ति, यत्र खारीमित वपेत ॥१६५६॥

खलधानं[1] खलं[2] नाम, यत्र धान्यादि चूर्ण्यते ।

❀ धूलीनामानि ❀

चूर्ण[1] क्षोद[2] श्च नामापि, चूर्णे रजसि कथ्यते ॥१६५७॥
धूलि[1] धूली[2] रजो[3] रेणु[4], पाशु[5] पांशु[6] श्च मन्यते ।

❀ लेष्टुनामानि ❀

लोष्टो[1] लोष्टु[2] श्च लेष्टु[3] श्च, दलो[4] दलि[5] श्च मृद्घनः ॥१६५८॥

❀ वल्मीकनामानि ❀

वल्मीको[1] वामलूर[2] श्च, नाकु[3] श्च कृमिपर्वतः[4] ।
शक्रशीरो[5] वम्रीकूट[6], षड् नामानि भवन्ति वै ॥१६५९॥

❀ नगरनामानि ❀

पुरी[1] पुरि[2] श्च पू[3] श्चैव, पट्टनं[4] पुटभेदनम्[5] ।
अधिष्ठानं[6] पत्तनञ्च[7], निवेश[8] श्च निवेशनम्[9] ॥१६६०॥

उद्रङ्गो[10] निगमो[11]द्रङ्ग·[12], स्थानीयं[13] नगरी[14] पुन. ।
नामान्येतानि मन्यन्ते, पण्डितै र्नगरस्य वै ॥१६६१॥

❀ नगरभेद. ❀

स्थानीयं[1] नाम तस्यास्ति, वह्वायत ञ्च यत् पुरम् ।
द्रोणमुखं[1] कर्वट[2] ञ्च, स्थानीयात लघुयत् पुरम् ॥१६६२॥

कर्वुटिकं[1] नाम तस्यास्ति, कर्वटार्द्धं यदायतम् ।
विज्ञेय कार्वटं[1] यच्च कर्वुटिकार्द्धकं पुन ॥१६६३॥

कार्वटस्यार्द्ध तुल्यं, पत्तनं[1] पुटभेदनम् ।
निगम [1] पत्तनार्द्धं स्यात्, निगमार्द्ध निवेशनम्[1] ॥१६६४॥

द्रङ्गो[1] निवेश[2] उद्रङ्गः[3], पत्तानाच्छ्रेष्ठ मुच्यते ।
शाखापुरं[1] चोपपुर[2], राजधानी पृथक् पुरम् ॥१६६५॥

पुरार्द्धभाग तुल्यं वै, खेट[1] नाम्ना प्रसिद्ध्यति ।

❀ राजधानीनाम ❀

अथ वै राजधानी[1] च, स्कन्धावारो[2] ऽपि कथ्यते ॥१६६६॥

❀ कोट्टनाम ❀

दुर्गं[1] कोट्ट[2] श्च नामापि, दुर्गस्य मन्यते बुधै ।

❀ गयानाम ❀

गयनामक राजर्षे:, पुरं गया[1] प्रसिद्ध्यति ॥१६६७॥

## ❀ कन्नोजनामानि ❀

कन्याकुब्ज[1] तथा कोश[2], कन्यकुब्ज[3] कुशस्थलम्[4] ।
गाधिपुर[5] महोदयं[6], चेति कन्नोज उच्यते ॥१६६८॥

## ❀ काशीनामानि ❀

काशी[1] काशि[2] श्च प्रख्याता, वाराणसी[3] वराणसी[4] ।
शिवपुरी[5] च नामानि, मन्यन्ते पण्डितै र्जनैः ॥१६६९॥

## ❀ अयोध्यानामानि ❀

अयोध्या[1] कोशला[2] ख्याता, साकेत[3] कोसला[4] च सा ।

## ❀ मिथिलानाम ❀

प्रसिद्धा मिथिला[1] प्रोक्ता, विदेहा[2] ऽपि पुनश्च सा ॥१६७०॥

## ❀ त्रिपुरीनाम ❀

चेदीदेशस्य त्रिपुरी[1], स्याच् चेदिनगरी[2] पुन ।

## ❀ कौशाम्बीनाम ❀

वत्सदेशस्य कौशाम्बी[1], पुरी च वत्सपत्तनम्[2] ॥१६७१॥

## ❀ उज्जयनीनामानि ❀

उज्जयनी[1] तथाऽवन्ती[2], पुन पुष्पकरण्डिनी[3] ।
विशाला[4] चेति नामानि, प्रसिद्धानि भुवस्तले ॥१६७२॥

❀ पाटलीपुत्रनाम ❀

ख्यात पाटलिपुत्र[1] च, कुसुमपुर[2] मुच्यते ।

❀ चम्पापुरीनामानि ❀

*कर्णपूः[1] मालिनी[2] चम्पा[3], लोमपादपुरी[4] च सा ॥१६७३॥
लोमपादपूः[5] सैवास्ति, कर्णपुरीति[6] नामिका ।

❀ बाणपुरनामानि ❀

देवीकोट[1] कोटिवर्षं[2], शोणितपुर[3] मित्यपि ॥१६७४॥
बाणासुरस्य पूः स्याच्च, बाणपुर[4] मुमावनम्[5] ।

❀ मथुरानामानि ❀

मथुरा[1] मधुरा[2] ख्याता, मधूपघ्नं[3] च मन्यते ॥१६७५॥

❀ हस्तिनापुरनामानि ❀

प्रख्यातं हस्तिनापुरं[1], हस्तिनीपुर[2] मित्यपि ।
हास्तिनपुर[3] प्रोक्तं च, गजपुर[4] गजाह्वयम्[5] ॥१६७६॥

---

*१. अधुना 'पटना' कथ्यते लोके ।

*२. अधुना 'भागलपुर' कथ्यते जनै ।

## ❀ तामलिप्तनामानि ❀

दामलिप्तं[1] तामलिप्त[2], तामलिप्ती[3] तमालिनी[4] ।
स्तम्बपू[5] स्तम्बपूरी[6] च, भवेद् विष्णुगृहं[7] पुनः ॥१६७७॥

## ❀ कुण्डिननपुरनामानि ❀

विदर्भा[1] कुण्डिनापुर[2], कुण्डिन[3] कुण्डिनपुरम्[4] ।

## ❀ द्वारकानामानि ❀

प्रोक्ता तु द्वारका[1] द्वारा,-वती[2] द्वारवती[3] पुरी ॥१६७८॥
नगरी निषधा[1] ख्याता, ज्ञायते नलभूपते ।

## ❀ प्राकारनामानि ❀

प्राकारो[1] वरणः[2] साल[3], स्याद् दुर्ग परितः खलु ॥१६७९॥
वप्र[1] इचयोऽपि कोट्टस्य, मूलभूमौ निगद्यते ।
प्राकाराग्रं[1] कपिशोर्ष[2], प्राकारोपरि क्रियते ॥१६८०॥
अट्ट[1] इचट्टालक[2] क्षौमम्[3], सालोपरि समस्थलम् ।
सैन्यगृहं कोट्टोपरि, प्रोक्तं तूपरिमालके ॥१६८१॥

## ❀ नगरद्वारनाम ❀

पूर्द्वारं[1] गोपुरं[2] चेति, नगरद्वारमुच्यते ।

## ❀ रथ्यानामानि ❀

प्रतोली[1] विशिखा[2] रथ्या[3], रथ्यानाम त्रयमिदम् ॥१६८२॥

### ❀ परिकूटनामानि ❀

नगरद्वारकूट[1] श्च, नगरद्वारकूटक[2] ।
परिकूटं[1] हस्तिनख[2], पूर्द्धाराऽरोहणस्थलम् ॥१६८३॥

### ❀ मुखनाम ❀

मुखं[1] निःसरणं[2] प्रोक्तं, गृहप्रवेशद्वारकम् ।

### ❀ वाटनामानि ❀

वाटो[1] वृत्ति[2] श्च प्राचीन[3],–माऽऽवेष्टक[4] श्च नाम वै ॥१६८४॥
गृहस्य नगरस्यापि, क्रियते रक्षणाय यत् ।

### ❀ मार्गनामानि ❀

पदवि[1] पदवी[2] पद्या[3], पथः[4] पन्था[5] श्च पद्धति[6] ॥१६८५॥
एकपदी[7] च मार्गो[8]ऽध्वा[9], वर्त्तनी[10] वर्त्तनि[11] सृति[12] ।
सरणि[13] सरणी[14] वर्त्म[15], शरणी[16] निगम[17] स्तथा॥१६८६॥
अयन[18] चेति नामानि, मार्गस्य संभवन्ति वै ।

### ❀ सत्पथनामानि ❀

अतिपन्था[1] सुपन्था[2] श्च, सत्पथ[3] सुन्दरो भवेत् ॥१६८७॥

### ❀ उन्मार्गनाम ❀

अपन्था[1] श्चाऽपथं[2] नाम, भवेदुन्मार्ग एव हि ।

### ❀ कुमार्गनामानि ❀

कदध्वा[1] कापथं[2] व्यध्वो[3], दुरध्वो[4] विपथ[5] पुन ।।१६८८।।

प्रान्तर[1] दूरशून्योऽध्वा, कान्तारो[2] दुर्गम पथ ।
सुरङ्गा[1] च सुरुङ्गा[2] च, सन्धिला[3] सन्धि[4] रेव स ।।१६८९।।

### ❀ चतुष्पथनामानि ❀

चतुष्पथ[1] श्च सस्थानं[2], चतुष्क[3] श्च भवेत् पुन. ।

### ❀ त्रिपथनाम ❀

त्रिदिक्षु लग्नो मार्गस्तु, कथ्यते त्रिपथ[1] त्रिकन्[2] ।।१६९०।।

### ❀ द्विपथनाम ❀

द्विपथं[1] चारपथ[2] श्च, द्विदिशो प्रायकं पथम् ।

### ❀ राजमार्गनामानि ❀

घण्टापथो[1] महापथ[2], श्रीपथो[3] राजवर्त्म[4] च ।।१६९१।।

संसरणं[5] चाऽसंकुल[6], उपनिष्क्रमण[7] मित्यपि ।
उपनिष्कर[8] माख्यात, देशे राजविनिर्मितम् ।।१६९२।।

### ❀ विपणिनामानि ❀

विपणी[1] विपणि[2] पण्य-वीथी[3] च पण्यवीथिका[4] ।
वणिग्मार्ग[5] श्च नामानि, कथ्यन्ते विपणे किल ।।१६९३।।

## ❀ स्थाननामानि ❀

आस्पदं[1] स्यात् पदं[2] स्थानं[3], सर्वसाधारणं स्थलम् ।
स्थलेपस्त्रिमार्गा शृङ्गाटं[1], बहुमार्गी[1] च चत्वरम् ॥१६६४॥

## ❀ श्मशाननामानि ❀

श्मशानं[1] करवीरं[2] च, प्रेतवनं[3] पितृवनम्[4] ।
पितृगृहं[5] तथा प्रेत-गृहं[6] चेति प्रसिद्धकम् ॥१६६५॥

## ❀ गेहभूनाम ❀

गृहनिर्माणयोग्या भू, गेहभू[1] र्वास्तु[2] कथ्यते ।

## ❀ गृहनामानि ❀

अगारं[1] ञ्च गृहं[2] गेहं[3], सदनं[4] सद्म[5] मन्दिरम्[6] ॥१६६६॥

आवसथ[7] स्तथाऽऽवास[8], आलय[9] आश्रय.[10] क्षय.[11] ।
निवासो[12] वेश्म[13] निशान्त[14],
निकाय्य[15] ञ्च निकेतनम्[16] ॥१६६७॥

स्थान[17] ञ्च निलयो[18] पस्त्य[19] सस्त्याय[20] शरणं[21] सभा[22]।
उदवसित[23] माऽऽवासो[24], भवनं[25] वसति[26] स्तथा ॥१६६८॥

ओक[27] श्च धाम[28] धाम[29] ञ्च, शाला[30] कुल[31] तथा कुटः[32] ।
नामान्येतानि कथ्यन्ते, गृहस्य साक्षरै. किल ॥१६६९॥

इष्टिका प्रस्तरैर्बद्ध, कुट्टिमं[1] स्थलमुच्यते ।
सञ्जवनं[1] चतुःशाल[2], चतुर्दिक्षु कृत गृहम् ॥१७००॥

राज्ञां गृहन्तु प्रख्यातं, सौधं[1] वै नृपमन्दिरम्[2] ।
उपकारिको[1]-पकार्या[2], चोपकार्याऽपि कथ्यते ॥१७०१॥

## ❀ विभिन्नगृहाणानामानि ❀

सोधान्त प्रवेशाय, सिंहद्वार[1] प्रवेशनम्[2] ।
प्रसादन[1] श्च प्रासादं[2], धामोक्तं देव-भूपयो ॥१७०२॥

हर्म्यं[1] स्याद् धनिनां गेहं, मठ[1] आवसथ[2] स्तथा ।
आवसथ्यं[3] भवेन्नाम, छात्राणां व्रतिनाञ्च वा ॥१७०३ ॥

पर्णशाला[1] पर्णशाल[2], -मुटजो घास निर्मित ।
लोकेऽपिपर्णकुटीर, नामापि मन्यते पुनः ॥१७०४॥

## ❀ जिनमन्दिरनामानि ❀

जिनसद्म[1] विहार[2] श्च, चैत्य[3] मायतनं[4] पुनः ।
जिनालयं च प्रख्यातं, जिनमन्दिर मुच्यते ॥१७०५॥

## ❀ गर्भागारनामानि ❀

अपवरक[1] श्च वासौकः[2], पुन श्च शयनास्पदम्[3] ।
गर्भागारं[6] च नामानि, मन्यन्ते पण्डितै रिह ॥१७०६॥

## ❀ भाण्डागारनाम ❀

भाण्डागार[1] ञ्च कोशोऽपि, द्रव्य रक्षति तद् भवेत् ।

## ※ शिरोगृहनाम ※

सौधादे रुर्ध्वभाग स्याद्, चन्द्रशाला[1] शिरोगृहम् ॥१७०७॥

## ※ कुप्यशालानाम ※

सन्धानी[1] कुप्यशाला[2] च, भाण्डपात्रादि कार्य भूः ।

## ※ तृणौकनाम ※

तृणौकः[1] कायमान[2] श्च, काष्ठवंशादि निर्मितः ॥१७०८॥

## ※ होत्रीयनाम ※

होमादि कार्य्य हेत्वर्थं, होत्रीय[1] श्च हविर्गृहम्[2] ।
होत्रीयस्याग्रभागे तु, प्राग्वंशः[1] क्रियते गृहम् ॥१७०९॥

## ※ शान्तिगृहनामानि ※

आथर्वण[1] तथा शान्ती-गृहं[2] शान्तिगृहं[3] पनः ।
यज्ञस्थलसमीपस्य, शान्तिगेह हि नाम स्यात् ॥१७१०॥

## ※ आस्थानगृहनाम ※

आस्थानगृह[1] मिन्द्रकं[2], सभागृहस्य नाम स्यात् ।

## ※ तैलिशालानामानि ※

तैलिशाला[1] तैलिशालं[2], यन्त्रगृहं[3] निगद्यताम् ॥१७११॥

### ❀ सूतिकागृहनाम ❀

पुत्रादि प्रसव स्थान- मऽरिष्ट[1] सूतिकागृहम्[2] ।

### ❀ महानसनामानि ❀

रसवती[1] पाकस्थानं[2], सूदशाला[3] महानसम् ॥१७१२॥

### ❀ हस्तिशालानामानि ❀

चतुरं[1] हस्तिशालं[2] च, हस्तिशाला[3] ऽपि कथ्यते ।

### ❀ अश्वशालानामानि ❀

वाजीशाला[1] ऽश्वशाला[2] स्याद्, वाजीशालं[3] च मन्दुरा[4] ॥१७१३॥

### ❀ गोशालानाम ❀

सन्दानिनी[1] च गोशाला[2], यत्र गावो वसन्ति सा ।

### ❀ चित्रशालानामानि ❀

जालिनी[1] चित्रशालं[2] च, चित्रशाला[3] ऽपि कथ्यते ॥१७१४॥

### ❀ कुम्भशालानामानि ❀

कुम्भशाला[1] कुम्भशालं[2], प्रोक्तं पाकपुटी[3] पुन. ।

### ❀ तन्तुशालानामानि ❀

तन्तुशाला[1] तन्तुशालं[2], गर्त्तिका[3] वस्त्रकार्य्यभूः ॥१७१५॥

## ❀ नापितशाला ❀

शिल्पा[1] नापितशाला[2] च, नापितशाल[3] मुच्यताम् ।
वपनी[4] खरकुटी[5] च, केशाना वपनस्थले ॥१७१६॥

## ❀ शिल्पशाला ❀

आवेशन[1] शिल्पशाला[2], शिल्पिशाला[3] ऽपि कथ्यते ।

## ❀ सत्रशाला ❀

सत्रशाला[1] सत्रशाल[2], प्रतिश्रय[3] श्च मन्यते ॥१७१७॥

## ❀ आश्रमनाम ❀

आश्रम[1] श्च मुनिस्थान[2] -माश्रमस्य हि नाम वै ।

## ❀ आन्तिकाश्रयनाम ❀

उपघ्न[1] श्चाऽन्तिकाश्रयः[2], समीपाश्रयवान् भवेत् ॥१७१८॥

## ❀ पानीयशालानामानि ❀

प्रपा[1] पानीयशाला[2] च, पानीयशाल[3] मुच्यते ।

## ❀ मदिरागृहनाम ❀

मद्यपानगृह प्रोक्तं, गञ्जा[1] च मदिरागृहम्[2] ॥१७१९॥

❀ शबरावासनाम ❀

पक्कण[1] शबरावासो[2], भिल्लानां स्थल मुच्यते ।

❀ आभीरपल्लिकानाम ❀

आभीराणां स्थलं प्रोक्तं, घोष[1] श्चाऽऽभीरपल्लिका[2] ॥१७२०॥

❀ पण्यशालानामानि ❀

निषद्या[1] पण्यशाला[2] च, विपणी[3] विपणि[4] स्तथा ।
आपण.[5] पण्यशालं[6] च, हट्टो[7] ऽट्ट[8] कथ्यते पुन ॥१७२१॥

❀ वेश्याश्रयनामानि ❀

पुरं[1] वेश्याश्रयो[2] वेश्यो[3], वेश्यानां स्थल मुच्यते ।

❀ मण्डपनाम ❀

मण्डप[1] श्च जनाश्रय.[2], सन्मङ्गलगृहं भवेत् ॥१७२२॥

❀ भित्तिनाम ❀

भित्तिः[1] कुड्य[2] गृहाधारे, चैडूकं[1] तत्र कीकसम् ।

❀ वेदिकानामानि ❀

वितर्दी[1] वितर्दि[2] श्चैव, वेदी[3] वेदि[4] श्च वेदिका[5] ॥१७२३॥

चतुष्कोणवती भूमिः, काष्ठसंस्कारिता हि सा ।

❀ अङ्गणनामानि ❀

चत्वर[1] प्राङ्गण[2] प्रोक्तं, चाऽङ्गणं[3] पुनरङ्गनम्[4] ॥१७२४॥
अजिर[5] चापि प्रख्यात, गृहाग्रे शोभित स्थलम् ।

❀ द्वारनामानि ❀

द्वा[1] द्वार[2] प्रतोहार[3] श्च, वलज[4] चापि कथ्यते ॥१७२५॥

❀ अर्गलानाम ❀

परिघ[1] श्चाऽर्गला[2] नाम, महार्गलाया. हि मन्यते ।

❀ अर्गलिकानामानि ❀

अर्गलिका[1] सूचि[2] सूची[3], लघ्वर्गला सु कथ्यते ॥१७२६॥

❀ कुञ्चिकानामानि ❀

कुञ्चिका[1] कूचिका[2] चोक्ता, साधारणी[3] तथाऽङ्कुट[4] ।

❀ तालकनाम ❀

तालकं[1] द्वारयन्त्र[2] ञ्च, नामोक्तं तालकस्य वै ॥१७२७॥

❀ तालीनाम ❀

तदुद्घाटनयन्त्रं स्यात्, ताली[1] च प्रतितालयपि[2] ।

## ❀ उत्तरङ्गनाम ❀

उत्तरङ्गं[1] तिर्यग्द्वारो-र्ध्वदारुः कथ्यते किल ॥१७२८॥

## ❀ कपाटनामानि ❀

कपाट[1] श्च कवाट[2] श्च, कुवाटो[3] ऽरर[4] पुन ।
अररि[5] श्चेति नामानि, कथयन्ति हि कोविदा ॥१७२९॥

## ❀ पक्षद्वारनामानि ❀

पक्षकः[1] पक्षद्वारं[2] च, खटक्किका[3] ऽपि कथ्यते ।

## ❀ अन्तर्द्वारनाम ❀

अन्तर्द्वारं च प्रच्छन्नं[2], गुप्तद्वार हि मन्यते ॥१७३०॥

## ❀ बहिर्द्वारनाम ❀

प्रोक्तं पुन बंहिर्द्वार[1], प्रसिद्धं तोरणं[2] तथा ।

## ❀ वन्दनमालिकानाम ❀

मङ्गल्यं तोरणोर्ध्वे च, दाम वन्दनमालिका[1] ॥१७३१॥

## ❀ शिलानाम ❀

स्तम्भादीनामधोदारौ, शिला[1] संज्ञा प्रसिद्ध्यति ।

❀ नासानाम ❀

स्तम्भादे रुपरि स्थाप-यितुं नासा[1] च दारुणि ॥१७३२॥

❀ गोपानसीनाम ❀

पुन र्गोपानसिः[1] शब्दो, गोपानसी[2] तथैव च ।
वलभीच्छादने वक्र दारुणि कथ्यते किल ॥१७३३॥

❀ उम्बरनामानि ❀

उदुम्बर[1] उम्बुर[2] श्च, भवेदुम्बर[3] इत्यपि ।
गृहावग्रहणी[4] चापि, देहली[5] विदिता खलु ॥१७३४॥

❀ अलिन्दनामानि ❀

प्रघाणो[1] ऽलिन्द[2] आलिन्द[3], उपालिन्दक[4] उच्यते ।
प्राघाण.[5] प्रघण[6] श्चेति, वहिर्द्वारप्रकोष्ठके ॥१७३५॥

❀ कपोतपाली नाम ❀

प्रोक्तं कपोतपाली[1] च, विटङ्क[2] पक्षिणां गृहम् ।

❀ पटलनाम ❀

छदि[1] श्च पटल[2] श्चैव, तद् गृहच्छदने भवेत् ॥१७३६॥

❀ वलीकनाम ❀

वलीक[1] चापि नीव्रं[2] स्यात्, पटलस्याग्र भागकः ।

❀ तमङ्गनामानि ❀

इन्द्रकोश[1] स्तमङ्ग[2] श्च, प्रोक्त स्तमङ्गक [3] पुन ॥१७३७॥

❀ वलभीनाम ❀

वलभी[1] वलभि[2] श्चापि, छदिराधार उच्यते ।

❀ दन्तकानाम ❀

दन्तका [1] नागदन्ता [2] स्याद्, भित्तिस्थे काष्ठनिर्मिते ॥१७३८॥

❀ प्रग्रीवनामानि ❀

प्रगीवो[1] ऽपाश्रयो[2] मत्ता- लम्ब [3] स्यात् मत्तवारण:[4] ।

❀ गवाक्षनामानि ❀

गवाक्षो[1] जालकं[2] चैव, ख्यातो वातायन:[3] पुन: ॥१७३९॥

❀ अन्नकोष्टकनामानि ❀

कुशूल[1] श्चाऽन्नकोष्टक [2], कुसूलो[3] ऽपि निगद्यते ।

❀ कोणनामानि ❀

कोणो[1] ऽश्री[2] कोटि[3] रश्रि[4] श्च,
पाली[5] पालि[6] रणी[7] पुन· ॥१७४०॥

अणि.[8] कोटी[9] तथाऽस्त्र[10] श्च, नामानि कथितानि हि ।

❀ सोपाननाम ❀

आरोहण[1] च सोपान[2], स्यात् सोपानस्य नाम वै ॥१७४१॥

❀ निःश्रेणीनामानि ❀

अधिरोहणी[1] निःश्रेणी[2], निःश्रेणि[3] श्चाऽधिरोहिणी[4]।

❀ स्तम्भनाम ❀

स्थूणा[1] स्तम्भ[2] श्च प्रख्यातो, गृहाधारे हि मन्यते ॥१७४२॥

❀ पुत्रिकानामानि ❀

पुत्रिका[1] सालभञ्जी[2] च, प्रोक्ता पञ्चालिका[3] च सा।
काष्ठादि निर्मिता लेप्य-मयी[1] त्वञ्जलिकारिका[2] ॥१७४३॥

❀ स्वस्तिकनामानि ❀

नन्द्यावर्त्तः[1] स्वस्तिक[2] श्च, सर्वतोभद्र[3] इत्यपि।
विच्छन्दा[1] नाम रचना, भवेद् धनाढ्य वेश्मनि ॥१७४४॥

❀ सम्पुटनामानि ❀

समुद्ग[1] सम्पुट[2] पुटौ[3], वस्तु किञ्चिद् गृहे भवेत्।

❀ मञ्जूषानामानि ❀

मञ्जूषा[1] पेटक.[2] पेटा[3], तथा पेडा[4] ऽपि नाम स्यात्।

## ※ सम्मार्जनीनामानि ※

सम्मार्जनी[1] च वर्धनी[2], शोधनी[3] पवनी[4] पुन: ॥१७४५॥
बहुकरी[5] तथा ख्याता, गृहशोधक वस्तुनि ।

## ※ सङ्करनाम ※

गृहप्रकीर्ण धूल्यादि सङ्करो[1] ऽवकरो[2] भवेत् ॥१७४६॥

## ※ उदूखलनाम ※

धान्यादि कुट्टक प्रोक्त,- मुदूखल[1]- मुलूखलम्[2] ।

## ※ प्रस्फोटननाम ※

पुनः प्रस्फोटनं[1] चैव, पवन मन्यते किल ॥१७४७॥

## ※ कण्डननाम ※

धान्यादि कुट्टनं कार्य्यं,- मऽवघात[1] श्च कण्डनम्[2] ।

## ※ कटनाम ※

उपवेशन कार्य्याय, किलिञ्ज[1] कथितः कट:[2] ॥१७४८॥

## ※ मुसलनामानि ※

मुशलो[1] मुषल[2] श्चैव, प्रसिद्धो मुसलो[3] ऽपि वै ।
आयोग्रं[4] चाप्ययोनि.[5] स्तु', नामापि मुसलस्य च ॥१७४९॥

## ❀ कण्डोलकनामानि ❀

वंशादिपात्रके पिट[1], कण्डोलक[2] श्च पिटक[3] ।

## ❀ चालनीनाम ❀

प्रख्यात चालनी[1] नाम, तितउ[2] रपि मन्यते ॥१७५०॥

## ❀ शूर्पनाम ❀

शूर्पं[1] सूर्पं[2] च्च प्रख्यात, प्रोक्त प्रस्फोटनं[3] पुनः ।

## ❀ चुल्लीनामानि ❀

अन्तिका[1]ऽश्मन्तक[2] चाऽन्ती[3], तथाऽधिश्रयणी[4] किल ॥१७५१॥

चूल्ली[5] चूल्लि[6] स्तथोध्मान[7], मुद्धानं नाम सग्रहे ।

## ❀ स्थालीनामानि ❀

उखा[1] चरु[2] रुषा[3] स्थाली[4], कुम्भी[5] कुण्ड[6] च पिठरम् ॥१७५२॥

## ❀ घटनामानि ❀

घटः[1] कुम्भः[2] करीर[3] श्च, कलश[4] कलसः[5] कुट[6] ।
निप[7] श्चेत्यादि नामानि, मन्यन्ते पण्डितै र्जनै ॥१७५३॥

## ❀ अङ्गारशकटीनामानि ❀

अङ्गारशकटी[1] चाऽङ्गा-रधानी[2] हसनी[3] पुनः ।
हसन्तिका[4] तथाऽङ्गार,-पात्री[5] नाम सु संग्रहे ॥१७५४॥

❋ अम्बरीषनाम ❋

अम्बरीष[1] स्तथा भ्राष्ट्र[2], कटाहस्याभिधा भवेत् ।

❋ ऋचीषनाम ❋

ऋचीष[1] मृजीषं[2] चैव, मन्यते पिष्टपाकभृत् ॥१७५५॥

❋ दर्वीनामानि ❋

कम्बिः[1] कम्बी[2] खजाका[3] च, दर्वी[4] दर्वि[5] श्च कथ्यते ।

❋ तर्दूनाम ❋

तर्दू[1] श्च दारुहस्तक[2], काष्ठदर्व्या निगद्यते ॥१७५६॥

❋ वार्धानीनामानि ❋

आलु[1] रालू[2] गलन्ती[3] च, कर्करी[4] करक.[5] पुन ।
वार्धानी[6] चेति प्रोक्तं वै, जलस्य लघुपात्रकम् ॥१७५७॥

❋ नालिकेरजनाम ❋

करङ्को[1] नालिकेरजः[2], कथ्यते कोविदैः पुन. ।

❋ कटाहनाम ❋

कटाह[1] कर्परो[2] लौह-कटाहस्य च नाम वै ॥१७५८॥

### ❀ मणिकनाम ❀

महत्पात्र जलस्योक्त, मणिको[1] ऽलिञ्जरो[2] द्वयम् ।

### ❀ गर्गरीनामानि ❀

कलशी[1] गर्गरी[2] दध्नो, मन्थनी[3] प्रथिता सदा ॥१७५९॥

### ❀ मन्थदण्डकनामानि ❀

मन्थो[1] मन्था[2] श्च मन्थान[3] स्तथा च मन्थदण्डकः ।
खज[4] श्च खजक[6] क्षुब्धो[7], वैशाख[8] श्च प्रसिद्ध्यति ॥१७६०॥

एतन्नामानि मन्यन्ते, दधिमन्थनसाधने ।

### ❀ दण्डकटकनामानि ❀

अस्य च दण्डकटक[1], स्तथा दण्डकरोटकम्[2] ॥१७६१॥

विष्कम्भः[3] कुटक[4] श्चैव, कुटर[5] कुठर[6] स्तथा ।
मञ्जीर[7] श्चापि मन्दीर[8], नामान्यष्टौ भवन्ति वै ॥१७६२॥

### ❀ शरावनामानि ❀

वर्धमान[1] शराव[2] श्च, शालाजीरो[3] ऽपि कथ्यते ।

### ❀ पानभाजननामानि ❀

कोशिका[1] मल्लिका[2] कसः[3], पारी[4] च पानभाजनम्[5] ॥१७६३॥
चषक[6] श्चापि कथितो, लघौ जलादिपात्रके ।

## ❀ कुतूनाम ❀

घृततैलादि पात्रस्य, ख्यात नाम कुतू[1] रिह ।।१७६४।।

कुतुपो[1] लघुपात्र स्याद्, घृताद्यानयनाय यत् ।

## ❀ खल्लनाम ❀

दृति[1] खल्ल[2] श्च पानीय,-भरणाय च चर्म्मण: ।।१७६५।।

## ❀ करकपात्रिकानाम ❀

आलू करकपात्रिका[1], चर्ममयी हि मन्यते ।

## ❀ भाण्डनाम ❀

भाण्ड[1] माऽऽवपनं[2] प्रोक्तं, सर्वप्रकारभाजनम् ।।१७६६।।

पात्रा[1] ऽमत्रे[2] च भाजनं[3], त्रिण्यपि भाण्डनामनि ।

स्थाल[1] विशालभाण्ड स्यात्, तत् पिधान[1] मुदञ्चनम्[2]।।१७६७।।

## ❀ पर्वतनामानि ❀

शैलो[1] ऽद्रि:[2] शिखरी[3] शिलो-च्चयो[4] ऽचल[5] श्च सानुमान्[6] ।

अगो[7] नगो[8]गिरि[9] ग्रावा[10], गोत्र[11]श्च कन्दराकर[12] ।।१७६८।।

कुध्रो[13]भूध्रो[14]महीध्र[15]श्च, धरो[16]भूभृद्[17]महीधर[18] ।

प्रपाती[19]पर्वतो[20]ऽहार्य[21]उर्वङ्गो[22]भूधर:[23]पुन ।।१७६९।।

कुट्टार[२८] श्चेति नामानि, मन्यन्ते पर्वतस्य हि ।

❀ उदयाचलनाम ❀

अथोदय[१] श्च पूर्वाद्रि[२], श्चोदयाचल उच्यते ॥१७७०॥

❀ अस्ताचलनाम ❀

अस्तो[१] ऽपि चरमाद्रि[२] श्च, मन्यतेऽस्ताचल. फिल ।

❀ हिमालयपर्वतनामानि ❀

उदगद्रि[१] स्तथाऽद्रिराट्[२], हिमप्रस्थो[३] हिमालय[४] ॥१७७१॥

हिमवान्[५] मेनकाप्राणे-शो[६] भवानीगुरु[७] पुन ।
नामान्येतानि मन्यन्ते, हिमालयस्य पण्डितै. ॥१७७२॥

❀ हिमालयपुत्रनामानि ❀

मैनाक[१] श्च सुनाभ[२] श्च, हिरण्यनाभ[३] इत्यपि ।
हिमालयसुतस्येति, नामानि प्रथयन्ति वै ॥१७७३॥

❀ अष्टापदपर्वतनामानि ❀

कैलासो[१] धनदावासो[२], ऽष्टापद[३] स्फटिकाचल:[४] ।
रजताद्रि[५] हराद्रि[६] श्च, हिमवद्धस[७] उच्यते ॥१७७४॥

❀ क्रौञ्चपर्वतनामानि ❀

क्रुञ्च:[१] क्रौञ्च[२] स्तथा कोञ्ज[३], स्त्रयोऽपि क्रौञ्चवाचका: ।

## * मलयाचलपर्वतनामानि *

चन्दनगिरि[1] राषाढो[2], मलयो[3] दक्षिणाचलः[4] ॥१७७५॥

## * माल्यवन्पर्वतनामानि *

प्रश्रवण[1] स्तु माल्यवान्[2], प्रोक्तः प्रस्रवणो[3] नगः ।

## * विन्ध्याचलपर्वतनाम *

विन्ध्याचलगिरे र्नाम, विन्ध्य[1] स्याद् जलवाहकः[2] ॥१७७६॥

## * शत्रुञ्जयपर्वतनाम *

शत्रुञ्जयगिरे र्नाम, विमलाद्रिः[1] शत्रुञ्जय[2] ।

## * मन्दराचलपर्वतनाम *

नामोक्तं मन्दराचल-स्य त्विन्द्रकोल[1]-मन्दरौ[2] ॥१७७७॥

## * त्रिकुटाचलनामानि *

त्रिमुकुट[1] स्सुवेल[2] श्च, त्रिकूट[3] स्त्रिककुद्[4] पुनः ।
त्रिकुटाचलशैलस्य, नामानि प्रथितानि वै ॥१७७८॥

## * गिरनारपर्वतनाम *

गिरनारगिरे र्नाम, उज्जयन्तः[1] प्रसिद्धयति ।
लोके रैवतक.[2] प्रोक्तो, गिरनारगिरि पुनः ॥१७७९॥

❀ कुलाचलपर्वतनाम ❀

कुलाचलगिरे र्नाम मुदारु[1] पारियात्रिक[2] ।

❀ लोकालोकपर्वतनाम ❀

चक्रवालो[1] गिरे र्नाम, लोकालोक[2] श्च कल्पित: ॥१७८०॥

❀ मेरुपर्वतनामानि ❀

रत्नसानु:[1] सुमेरु[2] श्च, मेरु[3] श्च कर्णिकाचल:[4] ।
स्वर्गिगिरि[5] श्च स्वर्गिरि[6], काञ्चनगिरि[7] रुच्यते ॥१७८१॥

❀ शिखरनामानि ❀

शृङ्ग[1] च शिखर[2] कूट[3] त्रीणि नामानि सन्ति वै ।

❀ भृगुनामानि ❀

भृगोर्नामानि प्रोक्तानि, प्रपात[1] श्चाऽतटो[2] भृगु[3] ॥१७८२॥

❀ मेखलानामानि ❀

नितम्बो[1] मेखला[2] नाम, कटको[3] गिरिमध्यभाक् ।

❀ कन्दरनामानि ❀

प्रोक्त कृत्रिमो गुहा, दरी[1] च कन्दरो[2] ऽपि वै ॥१७८३॥

❀ गह्वरनाम ❀

गुहा[1] च गह्वरं[2] नामा,-ऽखातविले हि कथ्यते ।

❀ द्रोणीनाम ❀

द्रोणी[1] च शैलयोः सन्धि, साक्षरः मन्यते सदा ॥१७८४॥

❀ पर्यन्तपर्वता नाम ❀

पर्यन्तपर्वता.[1] पादा.[2], मुख्याद्रे र्लघुपर्वता ।

❀ दन्तकाःनाम ❀

स्याद् दन्तका.[1] बहिस्तिर्यक् -प्रदेशा निर्गता गिरेः ॥१७८५॥

❀ अध्यतिकानाम ❀

पर्वतस्योर्ध्वभूमि र्वै, मन्यतेऽध्यतिका[1] बुधैः ।

❀ उपत्यकानाम ❀

अधोभूमि र्नगस्यात्र, उपत्यका[1] हि कथ्यते ॥१७८६॥

❀ प्रस्थनामानि ❀

सानु.[1] प्रस्थं[2] तथा स्नुः[3] स्याद्, शैल शृङ्गे च तुल्यभूः ।

❀ पाषाणनामानि ❀

पाषाण.[1]प्रस्तरः[2]ग्रावा[3],चाऽश्मा[4]दृषद्[5]तथा शिला[6] ॥१७८७॥

उपल[7] श्चेति नामानि, मन्यन्ते प्रस्तरस्य वै ।
कथिता गण्डशैला[1] श्च, स्थूलोपलाश्च्युताः खलु ॥१७८८॥

❀ आकरनामानि ❀

आकर[1] श्च खनि[2] खानि[3], गञ्जा[4] श्चेत्यपि कथ्यते ।

❀ पर्वतोत्पन्नधातुनामानि ❀

स्वर्णरौप्यादयो लोके, धातु[1] र्वा गैरिक[2] भवेत ॥१७८९॥

❀ खटीनामानि ❀

पाकशुक्ला[1] तथा शुक्ल-धातु[2] श्च खटिनी[3] खटी[4] ।
कठिनी[5] चेति नामानि, खटिन्याः कथयन्ति वै ॥१७९०॥

❀ लोहनामानि ❀

लोह[1] शस्त्र[2] तथा तीक्ष्ण[3], धीन[4] च धीवर[5] घनम्[6] ।
गिरिसार[7] शिलासारं[8], पिण्ड[9] पारशव[10] पुन· ॥१७९१॥

कालायस[11] तथाऽय[12] श्च, कृष्णामिष[13] च भूतले ।
नामान्येतानि लोहस्य, कथयन्ति हि कोविदाः ॥१७९२॥

❀ लोहकिट्टकनामानि ❀

मण्डूर[1] सरण[2] धूर्त्त[3] सिंहानं[4] लोहकिट्टके ।
सर्वं च तैजसं लोह[1], सर्वलोकैः हि कथ्यते ॥१७९३॥

❀ कुशीनाम ❀

विकारस्त्वयसः फाल[1], कुशी[2] चेत्यपि मन्यते ।

❀ ताम्रनामानि ❀

ताम्र[1] रक्तं[2] पवित्र[3] ञ्च, द्व्यष्टं[4] द्विष्ट[5] मुदुम्बरम्[6] ॥१७९४॥

कांस्य[७] कनीयसं[८] शुल्वं[९], वरिष्ठ[१०] ब्रह्मवर्धनम्[११] ।
म्लेच्छमुख[१२] तथा म्लेच्छ[१३]-मौदुम्बर[१४]च शावरम् ॥१७९५॥
मर्कटास्य[१६] च नामानि, ताम्रस्य कथयन्ति वै ।

## ❀ सीसकनामानि ❀

सीसं[१] च सीसकं[२] नागं[३], स्वर्णारि[४] सीसपत्रकम्[५] ॥१७९६॥
सिन्दूरकारणं[६] कृष्णं[७], समोलूक[८] सुवर्णकम्[९] ।
योगेष्ट[१०] यवनेष्टं[११] च, वध्रं[१२] च त्रपुबन्धकम्[१३] ॥१७९७॥
वप्रं[१४] पट्ट[१५] तथा चीनं[१६], चीनपट्ट[१७] महाबलम्[१८] ।
गण्डूपदभवं[१९] चेति, नामानि कथयन्ति वै ॥१७९८॥

## ❀ त्रपुनामानि ❀

वङ्ग[१] रङ्ग[२] च मृद्वङ्ग[३], नागज[४] नाग जीवनम्[५] ।
स्वर्णजं[६] श्वेतरूप्य[७] च, मधुक[८] मुखभूषणम्[९] ॥१७९९॥
आलीनकं[१०] तथाऽऽलीन[११], सलवण[१२] च सिहलम्[१३] ।
परासं[१४] गुरुपत्रं[१५] च, तमरं[१६] त्रपु[१७] पिच्चटम्[१८]॥१८००॥
कस्तीरं[१९] चक्रसंज्ञं[२०] च, घनं[२१] ज्येष्ठं[२२] शठ[२३] रज[२४] ।
एतन्नामानि सर्वाणि, मन्यन्ते पण्डिता स्त्रपो ॥१८०१॥

## ❀ रूप्यनामानि ❀

रूप्यं[१] रूप्रं[२] तथा श्वेत[३], त्रापुषं[४] रजतं[५] सितम्[६] ।
दुर्वर्णक[७] ञ्च दुर्वर्णं[८], जीवनं[९] वङ्गजीवनम्[१०] ॥१८०२॥

हसाह्वय[11] हिमांशु[12] श्च, वज्र[13] चन्द्राह्वयं[14] वसु[15] ।
कलधौत[16] तथा तारं[17], भीरुकं[18] कुमुदाह्वयम्[19] ॥१८०३॥

खर्जूर[20] भीरु[21] शुभ्र[22] ञ्च, शोध्य[23] सोध्यं[24] जवीयसम[25] ।
सौम्य[26] सर्वाणि नामानि, रूपस्य कथयन्ति च ।।१८०४।।

## ❀ सुवर्णनामानि ❀

स्वर्णं[1] शुक्र[2] सुवर्ण[3] ञ्च, वसु[4] वेणुतटोभवम्[5] ।
कर्वूर[6] कर्वुर[7] रुकमं[8], कर्च्चूर[9] कर्वुर[10] पुन ॥१८०५॥

कनक[11] काञ्चन[12] कार्त्त-स्वर[13] चामीकर[14] तथा ।
कल्याणं[15] कर्णिकारच्छा-यं[16] गाङ्गेय[17] ञ्च गैरिकम्[18] ।।१८०६।।

शातकुम्भ[19] श्रीमद्कुम्भ[20], शातकौम्भ[21] शिलोद्भवम्[22] ।
गारुड[23] भूत्तम[24] भर्म[25], लोहोत्तम[26] ञ्च लोभनम्[27] ।।१८०७।।

औजस[28] मर्जुनं[29] चन्द्रो[30], दाक्षायण[31] ञ्च वैणवम्[32] ।
रक्तवर्णं[33] हिरण्यं[34] च, हेम[35] हैम[36] ञ्च हाटकम्[37] ।।१८०८।।

राः[38] महारजत[39] भूरि[40], रजत[41] तारजीवनम्[42] ।
निष्क[43] श्चाऽष्टापदं[44] जाम्बू-नद[45] जातरूप[46] पुन ।।१८०९।।

कलधौत[47] तथा वह्नि-बीज[48] तापनीय[49] च वँ ।
नामान्येतानि मन्यन्ते, स्वर्णस्य पण्डितै सदा ।।१८१०।।

कुप्य[1] कोशो[2] हिरण्य[3] ञ्च, स्वर्णे रूप्ये कृताकृते ।
कुप्य[1] स्यात् तद्द्वयादन्यद्, रूप्य[2] तु द्वयमाहतम् ।।१८११।।

अलङ्कारसुवर्णं[1] स्यात्, शृङ्गीकनक[2] माऽऽयुधम्[3] ।
रजत ञ्च सुवर्ण ञ्च, मिलित धनगोलकम् ॥१८१२॥

❀ पित्तलनामानि ❀

आर[1] श्च पित्तला[2] शब्दो, विशेषपित्तले भवेत् ।
पुन. पित्तल नामानि, कथ्यन्ते पण्डितै रिह ॥१८१३॥

कपिलोहं[1] सुलोह[2] च, पीतलोह[3] सुलोहकम्[4] ।
आरकूटो[5] रिति[6] रीती[7], रिरी[8] रीरी[9] सुवर्णकम्[10] ॥१८१४॥

ब्राह्मी[1] तु ब्रह्मरीति[2] श्च, कपिला[3] महेश्वरी[4] तथा ।
राज्ञी[5] नाम्ना भवेदेक,-प्रकारस्य हि पित्तलम् ॥१८१५॥

❀ कांस्यनामानि ❀

कंसं[1] कांस्यं[2] प्रकाश[3] ञ्च, घोषो[4] विद्युत्प्रियं[5] मलम्[6] ।
रवण[7] मसुराह्वं[8] च, लोहजं[9] वङ्गशुल्वजम्[10] ॥१८१६॥

घण्टाशब्दं[11] च नामानि, कांस्यस्य सभवन्ति वै ।

❀ पञ्चलोहनाम ❀

सौराष्ट्रकं[1] पञ्चलोह[2], पञ्चधातुमयं च तद् ॥१८१७॥

❀ वर्त्तलोहनाम ❀

वर्त्तकं[1] वर्त्तलोहं[2] च, लोहधातुभिदा भवेत् ।

## ❀ पारदनामानि ❀

पारत[1] पारद[2] सूत[3], अल[4] अ चपलो[5] रस[6] ॥१८१८॥

हरवीजं[7] च नामानि, मन्यन्ते पारदस्य वै ।

## ❀ अभ्रकनामानि ❀

अभ्रकं[1] स्वच्छपत्रं[2] च, गगना-[3]ऽम्बुद[4] वाचकम् ॥१८१९॥

अमलं[5] गिरिज[6] चैव, गिरिजामल[7] मुच्यते ।

## ❀ सौवीरनामानि ❀

स्रोतोऽञ्जन तु सौवीर[2], कापोत[3] कृष्ण[4]-यामुने[5] ॥१८२०॥

## ❀ तुत्थनामानि ❀

तुत्थाञ्जनं[1] तथा तुत्थं[2], शिखिग्रीवं[3] मयूरकम्[4] ।

पुनस्तुत्थविशेषो वै, सूपातुत्थ[1] वितुन्नकम्[2] ॥१८२१॥

कास्यनीलं[3] हेमतारं[4], तन्नीलाञ्जन मुच्यते ।

पुन कर्परिकातुत्थं[1],चाऽमृतासङ्ग[2] मऽञ्जनम्[3] ॥१८२२॥

## ❀ रसाञ्जननामानि ❀

रसगर्भं[1] रसाग्र[2] ञ्च, रसजातं[3] रसाञ्जनम् ।

कथ्यते तार्क्ष्यशैलं[4] च, तुत्थे दार्वीरसोद्भवे ॥१८२३॥

### ※ पुष्पाञ्जननामानि ※

पुष्पकेतु[1] च प्रख्यातं, पुष्पाञ्जन[2] ञ्च पौष्पकस्[3] ।
रीतिपुष्पं[4] च नामापि, कुसुमाञ्जन मुच्यये ॥१८२४॥

### ※ माक्षिक(धातृ)नामानि ※

कदम्ब[1] श्चक्रनामा[2] च, माक्षिकं[3] चाऽजनामक[4] ।
वैष्णव[5] श्चेति नामानि, कथ्यन्ते माक्षिकस्य वै ॥१८२५॥

### ※ विटमाक्षिक(हीराकसी)नामानि ※

कामारि[1] विटमाक्षिक[2], स्ताप्य[3] स्तारारि[4] रेव च ।
नदीज[5] श्चेति नामानि, ताप्यस्य सम्भवन्ति वै ॥१८२६॥

### सौराष्ट्रदेशमृत्तिकानामानि ※

काक्षी[1] काच्छी[2] च सौराष्ट्री[3], पार्वती[4] पर्पटी[5] सती[6] ।
आढकी[7]तुवरी[8]मत्स्ना[9],मृत्सा[10]मृद्[11]च मृदाह्वया[12] ॥१८२७॥

मृत्तिका[13] कालिका[14] चैव, कंसोद्भवा[15] पुन किल ।
सौराष्ट्रमत्तिकाया श्च, नामानि कथितानि वै ॥१८२८॥

### ※ रक्तमाक्षिकनामानि ※

कासीसं[1] खेचर[2] धातु-कासीसं[3] धातुशेखरम्[4] ।
कंसकं[1] पुष्पकासीसं[2], नयनौषध[3] मित्यपि ॥१८२९॥

माक्षिकस्यैव भेदः स्यात्, ख्यातो गुणादि भेदतः ।

## ※ गन्धकनामानि ※

गन्धाश्मा[1] गन्धक[2] श्चैव, सौगन्धिक[3]श्च गन्धिक[4] ॥१८३०॥

शुल्वारिः[5] शुकपुच्छ[6] श्च, पामारि[7] पुनरित्यपि ।
कुष्ठारि[8] श्चेति नामानि, मन्यन्ते गन्धकस्य वै ॥१८३१॥

## ※ हरितालनामानि ※

आल[1] ताल[2] च वङ्गारि[3], हरिताल[4] विडालकम्[5] ।
विस्रगन्धि[6] च गोदन्त[7], गोपित्त[8] वशपत्रकम्[9] ॥१८३२॥

खर्जूरं[10] पिञ्जरं[11] चापि, लोमहृद[12] नटमण्डनम्[13] ।
पीतन[14] चेति नामानि, तालस्य सम्भवन्ति वै ॥१८३३॥

## ※ मनःशिलानामानि ※

मनःशिला[1] मनोगुप्ता[2], मनोह्वा[3] नागजिह्विका[4] ।
नागमाता[5] तथा गोला[6], शिला[7] च रसनेत्रिका[8] ॥१८३४॥

करवीरा[9] च नेपाली[10], नैपाली[11] कुनटी[12] तथा ।
रोचनी[13] चेति नामानि, शिलाया सम्भवन्ति वै ॥१८३५॥

## ※ सिन्दूरनामानि ※

सिन्दूर[1] चीनपिष्ट[2] च, नागरक्त[3] च नागजम्[4] ।
शृङ्गारभूषण[5] चैव, शृङ्गार[6] मपि मन्यते ॥१८३६॥

❀ हिङ्गुलनामानि ❀

हङ्गुलो[१] हिङ्गुलु[२] श्चैव, हंसपाद[३] प्रसिद्धक ।
कुरुविन्दं[४] च नामानि, कथ्यन्ते हिङ्गुलस्य वै ॥१८३७॥

❀ शिलाजतुनामानि ❀

गैरेयं[१] गिरिजं[२] चाऽश्यं[३], शिलाजतु[४] तथाऽश्मजम्[५] ।

❀ काचलवणनाम ❀

काच[१] क्षारो[२] द्वयं नाम, काचलवण उच्यते ॥१८३८॥

❀ चक्षुष्यानामानि ❀

चक्षुष्या[१] दृक्प्रसादा[२] स्यात् कुलाली[३] च कुलत्थिका[४] ।

❀ गोपरसनामानि ❀

बोलो[१] गोपरसो[२] गोपो[३], गन्धरसो[४] रस[५] शस[६] ॥१८३९॥
पिण्ड[७] प्राण[८] श्च नामाऽपि, बोलस्य कथ्यते बुधै ।

❀ रत्ननामानि ❀

वसु[१] रत्नं[२] मणि[३] श्चैव, माणिक्य[४] मपि मन्यते ॥१८४०॥

❀ रत्नविशेषनामानि ❀

हीरकं[१] मौक्तिकं[२] स्वर्णं[३], रजत[४] चर्म[५] चन्दनम्[६] ।
शङ्खो[७] वस्त्रं[८] च नामानि, विशेषरत्नकानि वै ॥१८४१॥

## ❀ वैडूर्यरत्ननाम ❀

प्रसिद्ध रत्नभेदेषु, वैडूर्यं[1] वालवायजम्[2] ।

## ❀ मरकतनामानि ❀

अश्मगर्भ[1] स्त्वश्मयोनि[2], र्मरकत[3] र्हरिन्मणि[4] ॥१८४२॥

गारुत्मत[5] च नामानि, मन्यन्ते हि हरिन्मणे. ।

## ❀ पद्मरागमणि (माणेक) नामानि ❀

लक्ष्मीपुष्पं[1] तथा पद्म-रागो[2] लोहितक.[3] पुन. ॥१८४३॥

ख्यातो ऽरुणोपल[4] श्चैव, शोणरत्नं[5] तथैव च ।

एतन्नामानि मन्यन्ते, पद्मरागस्य पण्डितैः ॥१८४४॥

## ❀ नीलमणिनामानि ❀

इन्द्रनीलो[1] महानील[2], नीलमणि[3] श्च कथ्यते ।

## ❀ हीरकनामानि ❀

हीरको[1] रत्नमुख्य[2] च, सूचीमुखं[3] वरारकम्[4] ॥१८४५॥

वज्रं[5] तदर्थशब्द श्च, नामाऽस्ति हीरकस्य वै ।

वैराटो[1] राजावर्त्त[2] श्च, राजपट्टो[3] विराटज.[4] ॥१८४६॥

विराटदेश सम्भूत, नाम स्याद् हीरकस्य च ।

## ❀ प्रवालनामानि ❀

प्रवालो[1] रक्तकन्द[2] श्च, रक्ताङ्को[3] हेमकन्दलः[4] ॥१८४७॥
विख्यातो विद्रुम[5] श्चापि, कथ्यते विबुधैः खलु ।

## ❀ सूर्यकान्तमणिनामानि ❀

सूर्याश्मा[1] सूर्यकान्त[2] श्च, सूर्यमणि[3] स्तथैव च ॥१८४८॥
दहनोपल[4] श्च नामाऽपि, सूर्यकान्तस्य कथ्यते ।

## ❀ चन्द्रकान्तमणिनामानि ❀

चन्द्रकान्त[1] स्तथा चान्द्र, श्चन्द्रमणि[3] स्तथैव च ॥१८४९॥
चन्द्रोपल[4] श्च नामाऽपि, चन्द्रकान्तस्य मन्यते ।
क्षीरवत् श्वेतवर्णो वै, क्षीरस्फटिक[1] उच्यते ॥१८५०॥
पुनश्च तैलवर्णवान्, तैलस्फटिकनाम[1] वै ।
आकाश[1]-रवस्फटिकौ[2] च, सूर्यचन्द्रमणी इह ॥१८५१॥
अन्योऽस्ति क्षीरस्फटिक, स्तैलस्फटिक इत्यपि ।

## मौक्तिकनामानि

मुक्ता[1] मुक्ताफलं[2] मौक्ति-कं[3] शुक्तिज[4] रसोद्भवम्[5] ॥१८५२॥
हस्तिन शिरसि दन्तौ, दंष्ट्रा शुन-वराहयोः ।
मेघो मत्स्यो भुजङ्गमो, वेणु मौक्तिकयोनय ॥१८५३॥

॥ इति पृथ्वीकाय समाप्त ॥

## * अथाऽप्कायनामानि *

### * जलनामानि *

वारि[१] वार[२] जल[३] क्षीर[४], नीरं[५] नार[६] कुलीनसम्[७] ।
जीवनं[८] जीवनीय[९] च, भुवन[१०] भवन[११]वनम्[१२] ॥१८५४॥

पानीय[१३] प्राणद[१४] पाथो[१५], मेघपुष्पं[१६] च पुष्करम्[१७] ।
शवरं[१८]सवरं[१९]तोयं[२०], कीलाल[२१]सलिल[२२] कुशम्[२३] ॥१८५५॥

कवन्ध[२४] कमल[२५] चाऽम्भः[२६], कमन्ध[२७] शम्वरं[२८] दकम्[२९] ।
अर्णो[३०] ऽम्वु[३१] चाऽमृतं[३२] क[३३] वाः[३४],
आपो[३५] ऽप्[३६] च सर्वतोमुखम्[३७] ॥१८५६॥

पयो[३८] यादोनिवास[३९] श्च, घनरस[४०] स्तथोदकम्[४१] ।
इरा[४२] दिव्य[४३] विष[४४] सेव्य[४५],
पङ्कस[४६] घृत[४७] मऽरङ्कुरम्[४८] ॥१८५७॥

पिप्पल[४९] पिप्पल[५०] चैव, नलिन[५१] मलिनं[५२] तथा ।
पाताल[५३] पावन[५४] चापि, कृपीट[५५] कम्वलं[५६] पुन ॥१८५८॥

एतन्नामानि नीरस्य, मन्यन्ते पण्डितै र्जनै ।
विशेषनाम पल्लूरं[१], श्वेतजलस्य कथ्यते ॥१८५९॥

क्षारं जलं किट्टिमं[१] स्यात्, शालूक[१] गन्धयुग् जलम् ।
समलन्तु भवेदन्ध,-मतिस्वच्छन्तु काचिमम्[१] ॥१८६०॥

अस्ताघ[1] मतलस्पृक्[2] चा,-ऽस्थाघ[3] मऽस्थाग[4] मित्यपि ।
अगाध[5] मपि तन्नाम, यत् तलं न जनः स्पृशेत् ॥१८६१॥

गभीरं[1] गम्भीरं[2] निम्न[3],-मस्ताधार्थस्य वाचकम् ।
उत्तान[1] मुच्यते तत्र, यत्र किञ्चिद् जलं भवेत् ॥१८६२॥

अच्छ[1] जलं प्रसन्नं[2] स्या-दनच्छं[1] कलुषा[2] ऽविले[3] ।

## ❀ हिमनामानि ❀

अवश्याय[1]स्तु प्रालेय[2], तुषार[3] स्तुहिनं[4] हिमम्[5] ॥१८६३॥

धूमिका[6] धूमरी[7] धूम-महिषो[8] महिका[9] तथा ।
नीहारो[10] मिहिका[11] चेति, नामानि तुहिनस्य वै ॥१८६४॥

## ❀ हिमानीनामानि ❀

हिमसन्तति[1] र्हिमानी[2], हिमराशी प्रयुज्यते ।

## ❀ समुद्रनामानि ❀

समुद्र[1] सागर[2] सिन्धु[3], स्तिमिकोशो[4] महाशयः[5] ॥१८६५॥

जलधि[6] र्जलराशि[7] श्च, जलनिधि[8] स्तथोदधि[9] ।
महोप्रावार[10]उर्वङ्गो[11], वारिनिधि[12]श्च वारिधिः[13] ॥१८६६॥

वारीशो[14] वारिराशि[15] श्च, सरस्वान्[16] धरणीप्लवः[17]।
अकूवारो[18] महाकच्छो[19], ऽकूपारो[20] मकरालयः[21] ॥१८६७॥

नदीशो[22] यादईश[23] श्च, स्रोतईश[24] श्च दारद[25] ।
याद पति[26] उदन्वान्[27] वै, मितद्रु[28] र्मकराकर.[29] ॥१८६८॥

पारावार[30] स्तथाऽवार -पारो[31] रत्नाकरो[32] ऽर्णवः[33] ।
प्रसिद्धो रत्नराशि[34] श्च, वीचिमाली[35] किल पुन ॥१८६९॥

एतन्नामानि मन्यन्ते, समुद्रस्य च साक्षरै ।
द्वीपान्तरा असङ्ख्या स्ते, सप्तैवेति तु लौकिका ॥१८७०॥

## ❀ विभिन्नसमुद्रनामानि

लवणवारि[1] नामैव, लवणोदो[2] निगद्यते ।
क्षीरवारि[1] श्च क्षीरोदे[2], दधिवारि[1] श्च दध्युद[2] ॥१८७१॥

आज्योद[1] आज्यवारि[2] श्च, सुरावारि[1] सुरोदक.[2] ।
इक्षूद[1] श्चेक्षुवारिः[2] स्याद्, स्वादूदः[1] स्वादुवारिक[2] ॥१८७२॥

नामान्येतानि मन्यन्ते, समुद्रस्य विशेषत ।
*अन्यत्र लावणादयो, नामान्यपि प्रसिद्धका ॥१८७३॥

## ❀ तरङ्गनामानि ❀

ऊर्मि[1] उत्कलिका[2] भङ्गो[3], वीचि[4] श्च तरङ्ग[5] पुन ।
उल्लोलो[1] लहरी[2] चैव, कल्लोलो[3] महति त्विह ॥१८७४॥

---

*सप्तसमुद्रनामानि—
[१] लावण, [२] रसमयः, [३] सुरोदक, [४] सार्पिषः,
[५] दधिजलः, [६] पय पयाः, [७] स्वादुवारि
श्चेति सप्तसमुद्रनामानि सन्ति ॥

### ❀ आवर्त्तनामानि ❀

आवर्त्तो[1] वोलक[2] श्चासौ, तालूरः पयसां भ्रमः ।

### ❀ वेलानाम ❀

वेला[1] नामाऽपि विख्यातः, कथ्यते वृद्धिरम्भसः ॥१८७५॥

### ❀ अब्धिकफनामानि ❀

अब्धकफ[1] स्तथा फेनो[2], हिण्डीरो[3] हिण्डिर.[4] पुन ।
डिण्डीर[5] श्चापि प्रख्यात, सागरमल[6] उच्यते ॥१८७६॥

### ❀ जलस्फोटनामानि ❀

बुद्बुदः[1] स्थासक[2] श्चैव, जलस्फोटो[3] ऽपि कथ्यते ।

### ❀ मर्यादानाम ❀

मर्यादा[1] कुलभू[2] र्नाम, समुद्रपार्श्व भूमय ॥१८७७॥

### ❀ समुद्रतटनामानि ❀

कुलं[1] कच्छः[2] प्रपात[3] श्च, रोध.[4] प्रतीर[5] मित्यपि ।
तटं[6] तीरं[7] च विज्ञेयं, नद्युदध्यो स्तटं सदा ॥१८७८॥

### ❀ पुलिननाम ❀

पुलिनं[1] सैकतं[2] नाम, जलहीनं तटस्थलम् ।

## ❀ द्वीपनाम ❀

अन्तरीपं[1] तथा द्वीप[2], ब्रूयादन्तर्जले तटम् ॥१८७९॥

यत्र स्थित स्तत् पर च, पारं[1] भवति ज्ञायते ।
यत्र स्थित स्तदऽवारं[1], उभान्त स्यात् पात्र[1] मिति ॥१८८ ॥

## ❀ नदीनामानि ❀

नदी[1] धुनी[2] धुनि[3] सिन्धु[4], ह्रदिनी[5] ह्लादिनी[6] वहा[7] ।
स्रोतः[8] स्रोतस्विनी[9] कर्षू[10], स्रोतस्वती[11] सरस्वती[12] ॥१८८१॥

शैवलिनी[13] स्रवन्ती[14] च, समुद्रदयिता[15] सरित्[16] ।
जलधिगा[17] ऽऽपगा[18] कुल्या[19],
कूलङ्कषा[20] च निम्नगा[21] ॥१८८२॥

निर्झरिणी[22] च वाहिनी[23], जम्बालिनी[24] तरङ्गिणी[25] ।
रोधोवक्रा[26] तथा द्वीप-वती[27] पर्वतजा[28] पुन ॥१८८३॥

ख्याता हिरण्यवर्णा[29] वै, तटिनी[30] च तथैव हि ।
एतन्नामानि मन्यन्ते, नद्या श्च पण्डितै र्जनै ॥१८८४॥

## ❀ गङ्गानदीनामानि ❀

गङ्गा[1] भागीरथी[2] ख्याता, त्रिपथगा[3] त्रिमार्गगा[4] ।
त्रिस्रोता[5] खापगा[6] स्वर्ग्या-पगा[7] स्वरापगा[8] तथा ॥१८८५॥

त्रिदशदीर्घिका[9] सिद्धा-पगा[10] सरिद्वरा[11] पुन: ।

विष्णुपदी[१२] च स्वर्वापी[१३], मन्दाकिनी[१४]कुमारसू.[१५] ॥१८८६॥

भीष्मसू[१६] ऋषिकुल्या[१७] च, जह्नुकन्या[१८] च जाह्नवी[१९] ।
हैमवती[२०] तथा हर-शेखरा[२१] चेति नामानि ज्ञायताम् ॥१८८७॥

❀ यमुनानदीनामानि ❀

यमुना[१] सूर्यजा[२] चैव, कलिन्दतनया[३] यमी[४] ।
कलिन्दपुत्री[५] कालिन्दी[६], स्यु र्यमभगिनी[७] पुनः ॥१७८८॥

❀ नर्मदानदीनामानि ❀

नर्मदा[१] मेकलाद्रिजा[२], तथा मेकलकन्यका[३] ।
इन्दुजा[४] पूर्वगङ्गा[५] च, रेवा[६] च मेखलाद्रिजा[७] ॥१८८९॥

पुन र्मेकलकन्या[८] ऽपि, नर्मदाया श्च नाम वै ।

❀ गोदावरीनदीनाम ❀

गोदा[१] गोदावरी[२] नाम्नी, नदी ख्यातैव वर्तते ॥१८९०॥

❀ तापीनदीनामानि ❀

तापी[१] च तपनी[२] नाम्नी, प्रख्याता तपनात्मजा[३] ।

❀ शतद्रुनदीनाम ❀

शतद्रु[१] श्च शुतुद्रि.[२] स्यात्, लोके सतलजो नदी ॥१८९१॥

❀ कावेरीनदीनाम ❀

तथा ख्याता हि कावेरी[1], स्यादऽर्धजाह्नवी[2] पुन ।

❀ करतोयानदीनाम ❀

करतोया[1] नदी ख्याता, सदानीरा[2] ऽपि कथ्यते ॥१८६२॥

❀ चन्द्रभागानदीनामानि ❀

चन्द्रका[1] चन्द्रभागा[2] च, चान्द्रभागा[3] ऽपि मन्यते ।

❀ गोमतीनदीनामानि ❀

गोमती[1] गौतमी[2] चैव, वासिष्ठी कथ्यते ऽपि वै ॥१८६३॥

❀ सरस्वतीनदीनाम ❀

ब्रह्मपुत्री[1] नदी स्याद् वै, प्रसिद्धा ऽपि सरस्वती[2] ।

❀ विपाशानदीनाम ❀

पुनर्नदी विपाशा[1] च, विपाड्[2] नामाऽपि मन्यते ॥१८६४॥

❀ बाहुदानदीनामानि ❀

आर्जुनो[1] तटिनी स्याच्च, बाहुदा[2] सैतवाहिनी[3] ।

❀ वैतरणीनदीनाम ❀

वैतरणी[1] नदी नाम, नरकस्था[2] ऽपि कथ्यते ॥१८६५॥

※ मुरलानदीनाम ※

मुरला[1] निम्नगा नाम, मुरन्दला[2] ऽपि मन्यते ।

※ सुरवेलानदीनाम ※

सुनन्दिनी[1] नदी नाम, सुरवेला[2] ऽपि कथ्यते ॥१८९६॥

※ चर्मण्वतीनदीनाम ※

रन्तिनदी[1] नदी नाम, चर्मण्वती[2] च मन्यते ।

※ सिन्धुसङ्गमनाम ※

सिन्धुसङ्गमः[1] सम्भेद.[2], नद्या सङ्गम उच्यते ॥१८९७॥

※ स्रोतनाम ※

स्रोतो[1] भवति तल्लोके, यत्राऽम्भः सरणं स्वतः ।

※ प्रवाहनामानि ※

ओघो[1] धारा[2] रयो[3] वेणी[4], पुनः प्रवाह[5] उच्यते ॥१८९८॥

※ घट्टनामानि ※

अवतार[1] स्तथा तीर्थो[2], घट्टो[3] ऽपि कथ्यते पुनः ।

※ पूरनामानि ※

अम्बुवृद्धिः[1] प्लवः[2] पूर[3], इत्येति नामानि मन्यते ॥१८९९॥

❀ वक्राणिनामानि ❀

वक्राणि[1] पुटभेदा[2] श्च, चक्राणि[3] कथ्यतेऽपि वै ।

❀ भ्रमानाम ❀

जलनिर्गमन स्ताम्य, भ्रमा[1] श्च जलनिर्गमा[2] ॥1900॥

❀ जलोच्छ्वासानामानि ❀

परिवाहा[1] परीवाहाः[2], जलोच्छ्वासाः[3] पयोगमाः ।

❀ कूपकानाम ❀

जलार्थमिह खन्यन्ते, कूपका[1] श्च विदारकाः[2] ॥1901॥

❀ प्रणालीनाम ❀

प्रणाली[1] जलमार्ग[2] स्तु, मकरास्य निभो भवेत् ।

❀ नीकानामानि ❀

नीका[1] कुल्या[2] तथा पानं[3], सारणी[4] सारणिः[5] पुनः ॥1902॥

जलस्य खातकाया श्च, तन्नामानि सम्भवन्ति हि ।

❀ वालुकानाम ❀

वालुका[1] सिकता[2] नाम, वालुकाया श्च कथ्यते ॥1903॥

## ❀ बिन्दुनामानि ❀

पृषत्[1] च पृषतो[2] विप्रुट्[3], बिन्दु[4] श्च मन्यतेऽपि वै ।

## ❀ कर्दमनामानि ❀

कर्दम[1] श्चिकिलः[2] पङ्क[3], श्चिक्खल्ल[4] श्च निषद्वर[5] ॥१९०४॥

विस्कल्ल[6] श्चापि जम्बाल[7], ख्यात शाद[8] स्तथा किल ।

कर्दमस्येति नामानि, कथ्यन्ते पण्डितै र्जनैः ॥१९०५॥

## ❀ शोणनामानि ❀

शोणो[1] हिरण्यबाहु[2] श्च, हिरण्यवाहो[3]ऽपि मन्यते ।

## ❀ नदनामानि ❀

उद्ध्यो[1] नदो[2] वहो[3] भिद्य[4], सरस्वान्[5] बृहती नदी ॥१९०६॥

## ❀ ह्रदनामानि ❀

ह्रदो[1] ऽगाधजलो[2] द्रहो[3], नद्यगाधा च कथ्यते ।

## ❀ कूपनामानि ❀

कूपो[1] ऽन्धु[2] रुदपान[3] श्च, प्रहि[4] नामाऽपि मन्यते ॥१९०७॥

## ❀ त्रिकानामानि ❀

नेमी[1] नेमि[2] स्त्रिका[3] कूपे, जलं भर्तुं च क्रियते ।

### ❀ नान्दीमुखनामानि ❀

नान्दीमुखो[1] विनाह[2] श्च, वीनाहो[3] मुखवन्धने ॥१६०८॥
पुन र्नान्दीपटो[4] नाम, तस्यैवार्थेऽपि कथ्यते ।

### ❀ आहावनामानि ❀

आहाव[1] श्च निपानं[2] स्या,-दुपकूप[3] जलाशये ॥१६०६॥

### ❀ वापीनामानि ❀

वापि[1] र्वापी[2] दीर्घिका[3] च, महाकूपो हि कथ्यते ।

### ❀ लघुकूपनामानि ❀

क्षुद्रकूप[1] श्चुरी[2] चुण्ढी[3], वृतको[4] लघुकूपक ॥१६१०॥

### ❀ घटीयन्त्रनामानि ❀

उद्घाटकं[1] घटीयन्त्र[2], मुद्धाटन[3] मुद्धातनम्[4] ।

### ❀ अरघट्टकनाम ❀

पादावर्तो[1] ऽरघट्टक[2], घटीयन्त्र विशेषकम् ॥१६११॥

### ❀ अखातनाम ❀

अखात[1] देवखातं[2] चे,-त्यकृत्रिमसर किल ।

## ❀ खातकनामानि ❀

कथ्यते खातकं[1] चैव, पुष्करिणी[2] स्तडागिका[3] ॥१६१२॥

## ❀ तडागनामानि ❀

पद्माकर[1] स्तडाग[2] श्च, कासार[3] सरसी[4] महान् ।
सर:[5] ख्यात स्तटाक[6] श्च, तडाको[7]ऽपि हि कथ्यते ॥१६१३॥

## ❀ लघुतडागनामानि ❀

वेशन्त.[1] पल्वल[2] स्तल्ल[3], स्तडागो लघु रेव सः ।

## ❀ खातिकानामानि ❀

खातिका[1] परिखा[2] खेयं[3], प्रसिद्ध मतिवर्तते ॥१६१४॥

## ❀ आवालनामानि ❀

आवालं[1] चाऽऽलवाल[2] चा, ऽऽवाप.[3] स्थानक[4] मुच्यते ।

## ❀ आधारनाम ❀

आधार[1] रम्भसां बन्धो, मन्यते पण्डितै र्जनैः ॥१६१५॥

## ❀ निर्झरनामानि ❀

उत्सः[1] प्रस्रवणं[2] स्रवः[3], स्याद् निर्झरो[4] झरो[5] सरिः[6] ।

### ❀ जलाशयनाम ❀

प्रोक्ता जलाशया[1] ख्याताः, जलाधारा[2] स्तथा सदा ॥१९१६॥

॥ इत्यप्कायः समाप्त ॥

## ❀ अथ तेजस्कायनामानि ❀

### ❀ अग्निनामानि ❀

अग्नि[1] र्वह्निः[2] स्वनि[3] शिखी[4], शुक्र[5] शुष्मा[6] शुचि[7] र्वसुः[8] ।
आशयाशः[9] शमीगर्भ[10], शोचिष्केश[11]स्तथाऽऽशिरः[12]॥१९१७॥

आश्रयाशः[13] कृशानु[14] श्च, वैश्वानरो[15] वृषाकपि[16] ।
कृष्णवर्त्मा[17] तथाऽर्चिष्मान्[18],
कृपाकुः[19] आशुशुक्षणि[20] ॥१९१८॥

सप्तार्चिः[21] सप्तजिह्व[22] श्च, ज्वालाजिह्व[23]श्च जागृविः[24] ।
ज्वलनो[25]जातवेदा[26]श्च, जुहुराणो[27]भुजि[28] र्वमि[29] ॥१९१९॥

उदर्चि[30] श्चित्रभानु[31] श्च, बृहद्भानुः[32] समन्तभुक्[33] ।
घृतार्चि[34]र्घसुरि[35] र्घासि[36], धूमध्वजो[37] धनञ्जयः[38] ॥१९२०॥

तनूनपात्[39] तमोघ्न[40] श्च, कृपीटयोनि[41] रश्वतिः[42] ।
उषर्बुधः[43]पृथुः[44]पुष्टः[45], वीतिहोत्र[46]श्च वञ्चति[47] ॥१९२१॥

बर्हिकत्को[48] बर्हिर्ज्योति[49], बर्हिरुत्थ[50] स्तथाऽनलः[51] ।

बर्हिःशुष्मा[५२] च हिरण्य-रेता[५३] पवनवाहन[५४] ॥१९२२॥

पीथो[५५] ऽनिलसखो[५६] हव्य,-भुग्[५७] हविरशनो[५८] हवि·[५९] ।
हवनो[६०] हव्यवाह[६१] श्च, हव्याशनो[६२] हुताशन·[६३] ॥१९२३॥

बहुलो[६४] मन्त्रजिह्व[६५] श्च, रोहिताश्वो[६६] विभावसुः[६७] ।
दमूना[६८] दमुनाः[६९] दीप्रः[७०], पृदाकु[७१] र्दहनः[७२] पविः[७३] ॥१९२४॥

भरथो[७४] नाचिकेत[७५] श्च, पर्परीक[७६] श्च पावकः[७७] ।
पृष्ठ[७८] छागरथो[७९] ऽप्पित्तं[८०], हुतवहो[८१] विरोचन·[८२] ॥१९२५॥

अपित्तं[८३] चापि बर्हि[८४] श्चे,-त्यग्ने र्नामानि सन्ति वै ।

### ❀ स्वाहानाम ❀

पुन रग्नेः प्रिया भवेत्, स्वाहा[१] ऽग्नायी च नामत· ॥१९२६॥

### ❀ वडवानलनामानि ❀

ऊर्व[१] श्चौर्व[२] स्तथाऽब्ध्यग्नि[३], र्वाडवो[४] वडवानल[५] ।
वडवामुख.[६] पुनर्नाम, भवेत् संवर्त्तक[७] स्तथा ॥१९२७॥

### ❀ दावानलनामानि ❀

दावानलो[१] दवो[२] दावो[३], वनवह्नि[४] रपि स्मृतः ।

### ❀ मेघवह्निनामानि ❀

मेघवह्निः[१] मेघज्योति[२], र्विद्युताग्नि रिरम्मद[३] ॥१९२८॥

❀ करीषाग्निनाम ❀

छागण[1] श्च करीषाग्नि:[2], नाम स्याद् छागणस्य हि ।

❀ तुषानलनाम ❀

तुषानल:[1] कुकूल[2] श्च, तुषाग्ने र्नाम हि द्वयम् ॥१९२९॥

❀ सज्वरनाम ❀

सन्ताप:[1] संज्वरो[2] नाम, वह्निजो दाह उच्यते ।

❀ बाष्पनाम ❀

ऊष्मा[1] बाष्प[2] श्च नाम वै, बाष्पस्य कथ्यते बुधै: ॥१९३०॥

❀ जिह्वानाम ❀

विश्वे स्युरर्चिषो जिह्वा:, तन्नामत: प्रसिद्धका: ।

❀ ज्वालानामानि ❀

अर्चि[1] र्ज्वाला[2] शिखा[3] कीला[4],
हेति:[5] स्याच्चेति वह्निज ॥१९३१॥

झलक्का[1] झिल्लक्को[2]-लक्का[3], महाज्वालार्थके च वै ।

❀ अग्निकणनाम ❀

स्फुलिङ्गो[1] ऽग्निकणो[2] वह्ने, र्नि सरन् लघुभागक: ॥१९३२॥

❀ अलातज्वालानाम ❀

उल्का[1] ऽलातज्वाला[2] द्वापि, निर्ज्वालोग्निः हि मन्यते ।

❀ अलातनाम ❀

अलात[1] मुल्मुक[2] नाम, प्रसिद्ध बहुवर्तते ।।१९३३।।

❀ धूमनामानि ❀

धूमो[1] जीमूतवाही[2] च, दहनकेतनं[3] स्तरी[4] ।
अम्भस्सू[5] रग्निवाह[6] श्च, वायुवाहः[7] प्रसिद्धकः ।।१९३४।।

करमाल[8] श्च नामापि, धूमस्य मन्यते खलु ।

❀ विद्युत्नामानि ❀

विद्युत्[1] तडित्[2] तथा शम्पा[3], सम्पा[4] चला[5] ऽचिरप्रभा[6] ।।१९३५।।

चञ्चला[7] चपला[8] चैरा-वती[9] च जलवालिका[10] ।
शतह्लदा[11] ऽशनिः[12] सौदा-मनी[13] सौदामिनि[14] तथा ।।१९३६।।

आकालिकी[15] च ह्लादिनी[16], क्षणिका[17] च क्षणप्रभा[18] ।
एतन्नामानि मन्यन्ते, विबुधै र्विद्युतः सदा ।।१९३७।।

।। इति तेजस्कायः समाप्तः ।।

## ※ अथ वायुकायनामानि ※

### ※ वायुनामानि ※

वायु[1] र्वाहो[2] वहो[3] वात[4], प्रकम्पन[5] प्रभञ्जनः[6] ।
पवनः[7] पवमान[8] श्च, दैत्यदेव[9] सुरालयः[10] ॥१९३८॥

जगत्प्राण[11] श्चल[12] प्राण[13], पृषदश्व[14] समीरण[15] ।
समीर[16] स्समिर[17] श्चैव, मातरिश्वा[18]महाबल[19] ॥१९३९॥

सभृत[20] सृमरो[21] मर्को[22], मेघारि[23] मारुतो[24] मरुत्[25] ।
उत्तरदिक्पति[26] शुचि[27], पश्चिमदिक्पति[28]पुन. ॥१९४०॥

अङ्कुति.[29] क्षिपति[30] श्चापि, नित्यगतिः[31] सदागति[32] ।
शीतलो[33] जलकान्तार[34], स्पर्शनो[35]जलभूषण.[36] ॥१९४१॥

आशुगः[37] क्षिपण[38] श्चाऽहि-कान्तो[39] गन्धवह[40] स्तथा ।
गन्धवाहो[41] नभ श्वासो[42],
नभस्वान्[43] श्वसनो[44] ऽनिलः[45] ॥१९४२॥

ध्वजप्रहरणो[46] लोल,-घण्टो[47] लोलपटः[48] पुनः ।
कम्पाक[49] श्चेति नामानि, मन्यन्ते पवनस्य वै ॥१९४३॥

### ※ झञ्झावातनाम ※

झञ्झावात[1] श्च झञ्झा[2] ऽपि, सवृष्टिवायु रुच्यते ।

## ❀ प्राणवायुनाम ❀

प्राणो[1] नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचर. ॥१६४४॥

## ❀ अपानवायुनाम ❀

वातोऽपान:[1] पुनर्मन्थापृष्ठपृष्ठान्तपार्ष्णिग ।

## ❀ समानवायुनाम ❀

समान:[1] पवन: सन्धि-हृन्नाभिषु च वर्तते ॥१६४५॥

## ❀ उदानवायुनाम ❀

उदान[1] पवमान श्च, वर्तते हृच्छिरोन्तरे ।

## ❀ व्यानवायुनाम ❀

सर्वत्वगृषु स्थितो व्यान[1], इत्यङ्गे पञ्च वायव: ॥१६४६॥

॥ इति वायुकाय समाप्त. ॥

# ❀ अथ वनस्पतिकायनामानि ❀

## ❀ वननामानि ❀

वन[1] वार्क्ष[2] दवो[3] दावो[4], विपिनं[5] गहन[6] झष[7] ।
अरण्य[8] मटवी[9] सत्रं[10], कान्तार[11] काननं[12] पुन: ॥१६४७॥
कक्ष:[13] षण्डं[14] च नामानि, मन्यन्ते विपिनस्य वै ।

## ❀ महारण्यनाम ❀

महारण्य[1] मरण्यानी[2], विशाल वन मुच्यते ॥१९४८॥

## ❀ तृणाटवीनाम ❀

तृणाटवी[1] च प्रस्तारो[2], झष[3] स्तु वहुघासवत् ।

## ❀ आरामनामानि ❀

आरामो[1] ऽपवनं[2] स्याच्च, वेल[3] मुपवन[4] पुनः ॥१९४९॥

निष्कुट[1] स्याद् गृहारामो[2], बाह्यारास[1] स्तु पौरक[2] ।
आक्रीडः[1] स्याद् तथोद्यान[2], राज्ञांत्वन्तः पुरोचितम् ॥१९५०॥

प्रमदवनं[1] राज्ञीनां, प्रमोदाय कृतं भवेत् ।
पुष्पवाटी[1] वृक्षवाटी[2], मन्त्रिवेश्यागृहस्थिता ॥१९५१॥

राज्या. क्रीडाकृते सैव, क्षुद्राराम[1] प्रसीदिका[2] ।

## ❀ वृक्षनामानि ❀

वृक्षो[1] रूक्षो[2] द्रुमो[3] ऽद्रि[4] श्च, हरिद्रु[5] र्द्रु[6] महीरुह[7] ॥१९५२॥

आरोहकः[8] कुटः[9] कुठ[10], कारस्कर.[11] करालिक[12] ।
अगो[13] ऽगमो[14] नगो[15] गच्छः[16],

सीमिको[17] हरितच्छद[18] ॥१९५३॥

पादपः[19] पुष्पदः[20] पर्णी[21] विटपो[22] विष्टर[23] स्तरु[24] ।

शालः[२५] सालः[२६] पलाशी[२७] च,
पुलाकी[२८] फलदी[२९] वसु[३०] ॥१९५४॥

शाखी[३१] च शिखरी[३२] स्कन्धी[३३], क्षितिरुह[३४] श्च वह्निभू[३५] ।
अंह्रिप[३६] श्चाङ्घ्रिपो[३७] जन्तु[३८],
जीर्ण[३९] श्चरणप[४०] कुज[४१] ॥१९५५॥

अनोकह[४२] उरु[४३] श्चैव, नन्द्यावर्त्त[४४] स्तथैव च ।
एतन्नामानि मन्यन्ते, वृक्षस्य विबुधै र्जनैः ॥१९५६॥

## ❀ कुञ्जनामानि ❀

ख्यातः कुञ्जो[१] निकुञ्ज[२] श्च, कुडङ्गो[३] ऽपि हि कथ्यते ।
त्रिणि नामानि मन्यन्ते, वृक्षै र्वृतान्तरे स्थले ॥१९५७॥

पुष्पं फलं क्रमात् पत्रं, वानस्पत्य[१] स्तु स द्रुमः ।
वनस्पति[१] स्तु स द्रुमः, फलमेव च पत्रकम् ॥१९५८॥

## ❀ फलेग्रहिनाम ❀

फलेग्रहिः[१] फलावन्ध्यो[२], यः फलत्येव स द्रुमः ।

## ❀ फलवन्ध्यनामानि ❀

फलवन्ध्यो[१] ऽवकेशी[२] चा, -ऽवकेशो[३] कथ्यतेऽपि वै ॥१९५९॥

त्रिणि नामानि वृक्षाणि, नार्पन्ति फल कदा ।

### ❀ फलवत्नामानि ❀

फलयुक्त तरो र्नाम, फलवान्[1] फलिन[2] फली[3] ॥१६६०॥

### ❀ ओषधीनामानि ❀

फलपक्कानन्तर ञ्च, यस्य नाश. स औषधी:[1] ।
ओषधि[2] रोषधी[3] चापि, नामत्रय जवादिके ॥१६६१॥

### ❀ क्षुपनाम ❀

क्षुपो[1] लघुशिफा शाखो, व्यवहारे निगद्यते ।

### ❀ लतानामानि ❀

प्रतति[1] र्व्रतति[2] र्वल्ली[3], वल्लि[4] र्लता[5] ऽपि कथ्यते ॥१६६२॥

ख्यात प्रतानिनी वीरुत्[2], उलपो[3] गुल्मिनी[4] पुन: ।
एतन्नामानि मन्यन्ते, गुच्छवत्यां लतार्थके ॥१६६३॥

### ❀ अङ्कुरनामानि ❀

अङ्कूर[1] श्चाऽङ्कुरो[2] रोह:[3], प्ररोह[4] श्चाऽपि कथ्यते ।

### ❀ बलिशनाम ❀

बलिशं[1] नाम तस्याऽस्ति, पर्वणो य समुत्थित: ॥१६६४॥

❀ शाखानामानि ❀

शाखा[1] शिखा[2] लता[3] नाम, वृक्षाङ्गे च लघौ स्मृतम् ।
शाला[1] साला[2] स्कन्धशाखा[3], बृहद्भाग स्तरो भवेत् ॥१९६५॥

❀ स्कन्धनाम ❀

प्रकाण्डमस्तकं स्कन्धो[1], वृक्षस्य कथ्यते बुधैः ।
प्रकाण्डो[1] गण्डिका[2] गण्ड[3], मूलात् शाखावधि द्रुमः ॥१९६६॥

❀ शिफानाम ❀

जटा[1] शिफा[2] द्वयं नाम, वृक्षमूले हि मन्यते ।

❀ स्तम्बनामानि ❀

प्रकाण्डरहिते गुल्मो[1], विटपः[2] स्तम्ब[3] उच्यते ॥१९६७॥

❀ शिरोनामनामानि ❀

शिरो[1] ऽग्रं[2] शिखरं[3] शिरो-नाम[4] वृक्षोर्ध्वभागके ।

❀ वृक्षमूलनामानि ❀

वृक्षाधोभागके मूल[1], श्चांह्रि[2] स्तथांह्रिनाम[3] वै ॥१९६८॥

ब्रध्नो[4] बुध्न[5] श्च नामापि, मन्यते पण्डितै र्जनैः ।

❀ वृक्षमज्जानाम ❀

सारो[1] मज्जा[2] द्वयं नाम, वृक्षसत्वे निगद्यते ॥१९६९॥

## ❀ वृक्षत्वग्नामानि ❀

त्वचा[1] त्वक्[2] वल्कल[3] वल्कं[4], छल्ली[5] चोचं[6] च कथ्यते ।

## ❀ वृक्षस्थाणुनामानि ❀

शुष्के वृक्षे स्थाणु[1] शङ्कु[2], ध्रुव[3]श्च ध्रुवको[4] भवेत् ॥१९७०॥

## ❀ काष्ठनामानि ❀

दारु[1] दलिक[2] मित्येव, काष्ठ[3] नामापि कथ्यते ।

## ❀ कोटरनाम ❀

निष्कुह[1] कोटर[2] श्च, वृक्षान्त र्जायते स्थलम् ॥१९७१॥

## ❀ मञ्जरिनामानि ❀

मञ्जा[1] च मञ्जरि[2] स्यु र्वै, वल्लरि[3] श्चापि वल्लरी[4] ।

## ❀ पत्रनामानि ❀

पत्रं[1] पर्णं[2] पलाशं[3] च, छदनं[4] चापि छद[5] दलम्[6] ॥१९७२॥

बर्हं[7] चेति हि मन्यन्ते, पत्रनामानि पण्डितैः ।

## ❀ किसलयनामानि ❀

किशलयं[1] नवे पत्रे, किसलयं[2] च पल्लवम्[3] ॥१९७३॥

किसलं[4] चेति नामानि, कथ्यन्ते किसलस्य वै ।

अत्यन्तनूतने पत्रे, प्रवाल[1] श्च कथ्यते बुधैः ॥१९७४॥

कोशी[1] शुङ्गा[2] प्रवालग्र-भागो भवति निश्चयात् ।

❀ दलस्नसानाम ❀

माढि[1] र्दलस्नसा[2] पत्र-नाडी बोधाय युज्यते ॥१९७५॥

❀ विटपनाम ❀

विस्तारो[1] विटप[2] श्चापि, वृक्षप्रसार बोधवान् ।

❀ पुष्पनामानि ❀

कुसुम[1] प्रसव[2] पुष्पं[3], सून[4] सुमनस[5] सुमम्[6] ॥१९७६॥

मणीवकं[7] प्रसून[8] चे-ति नामानि सुमस्य वै ।

जालकं[1] क्षारका[2] नाम, नूतनकलिकार्थकं ॥१९७७॥

कलिका[1] कोरक[2] स्याच्च, कुसुमकलिकार्थकः ।

कुड्मलं[1] मुकुल[2] ञ्चैत-दर्धस्फुटित कोरके ॥१९७८॥

❀ गुच्छनामानि ❀

गुच्छो[1] गुञ्छो[2] गुलुञ्छ[3] श्च, गुलुञ्छु[4] र्गुत्सकः[5] पुनः ।

गुत्स[6] श्च स्तबको[7] लुम्बी[8], नामान्यष्टौ च सन्ति वै ॥१९७९॥

❀ परागनाम ❀

परागो[1] नाम प्रख्यातः, पुष्परजो हि कथ्यते ।

## ❀ मकरन्दनामानि ❀

मकरन्दो[1] मरन्द[2] श्च, मधु[3] पुष्परसः[4] पुन ॥१९८०॥
पुष्परसार्थक काव्ये, कथ्यते कोविदै किल ।

## ❀ वृन्तनाम ❀

प्रसवबन्धनं[1] वृन्तं[2], फलपुष्पावलम्बने ॥१९८१॥

## ❀ विकसितपुष्पनामानि ❀

विकसित[1] विनिद्र[2] ञ्च, विमुद्रं[3] विकचं[4] स्मितम्[5] ।
उन्निद्र[6] हसित[7] स्मेर[8], व्याकोशं[9] स्फुटितं[10] स्फुटम्[11] ॥१९८२॥
उन्मिषतं[12] तथोज्जृम्भ[13], प्रबुद्ध[14]ञ्च विजृम्भितम्[15] ।
सफुल्ल[16] फुल्ल[17] मुत्फुल्ल[18],
प्रफुल्लं[19] दलितं[20] पुनः ॥१९८३॥
उच्छ्वसितं[21] च नामानि, स्फुटपुष्पस्य सन्ति वै ।

## ❀ सङ्कुचितपुष्पनामानि ❀

सङ्कुचितं[1] च निद्राणं[2], मुद्रित[3] मिलित[4] भवेत् ॥१९८४॥

## ❀ फलनामानि ❀

फलं[1] सस्यं[2] तथा शस्य[3], वानं[1] शुष्क फलं भवेत् ।
शलाटु[1] कथ्यते ऽपक्व, फलं तद् ग्रन्थि रुच्यते ॥१९८५॥

❀ ग्रन्थिनामानि ❀

परु [१] पर्व [२] तथा ग्रन्थि [३], त्रीणि नामानि सन्ति वै ।

❀ बीजकोशीनामानि ❀

शिम्बा [१] शिम्बी [२] शमी [३] शिम्बि [४],
बीजकोशी [५] तथा शिमि [६] ॥१९८६॥

एतन्नामानि मन्यन्ते, बीजकोशस्य साक्षरैः ।

❀ पिप्पलवृक्षनामानि ❀

अश्वत्थः [१] पिप्पल [२] ख्यात, श्रीवृक्षः [३] कुञ्जराशन [४] ॥१९८७॥

कृष्णावासो [५] बोधिसत्त्वो [६], बोधितरु [७] स्तथैव च ।
चलदल [८] श्च नामानि, मन्यन्ते पिप्पलस्य वै ॥१९८८॥

पुन र्नामाऽपि तद्भेद, प्लक्ष [१] श्च पर्कटी [२] जटी [३] ।

❀ वटवृक्षनामानि ❀

न्यग्रोध [१] स्तु बहुपाद् [२] स्याद्, वटो [३] वैश्रवणालय [४] ॥१९८९॥

❀ उदुम्बरनामानि ❀

जन्तुफल [१] श्च यज्ञाङ्ग [२], उडुम्बरः [३] उदुम्बर [४] ।
मशको [५] हेमदुग्धक [६], स्तद्भेदो जघनेफला [१] ॥१९९०॥

काकोदुम्बरिका [२] फल्गु [३], मलयु [४] रपि मन्यते ।

### ※ आम्रवृक्षनामानि ※

आम्र[1] श्चूत[2] श्च माकन्द[3], सहकारो[4] ऽपि कथ्यते ॥१९९१॥
पुन· आम्रतरो र्नाम, रसालो[5] ऽपि प्रसिद्धक· ।

### ※ सप्तपर्णनामानि ※

शारद·[1] शारदी[2] सप्त, -वर्ण[3] श्च विषमच्छद[4] ॥१९९२॥
अयुक्छदो[5] विशालत्वक्[6], षड् नामानि सन्ति च ।

### ❀ शोभाञ्जननामानि ❀

शोभाञ्जन[1] स्तथाऽक्षीवो[2], मोचक[3] स्तीक्ष्णगन्धक[4] ॥१९९३॥
शिग्रु:[5] सोभाञ्जनो[6] नाम, सौभाञ्जन[7] शौभाञ्जन[8] ।
पुन र्नाम्नोऽत्रभेदे, श्वेतमरिच[1] उच्यते ॥१९९४॥

### ※ पुन्नागनाम ※

पुन्नाग[1] नाम प्रख्यात, कथ्यते सुरपर्णिका[2] ।

### ❀ बकुलनामानि ❀

वकुल:[1] केसर[2] ख्यात, केशरो[3] ऽपि प्रयुज्यते ॥१९९५॥

### ❀ अशोकवृक्षनामानि ❀

कङ्केलि[1] र्वञ्जुलो[2] ऽशोको[3], ऽशोकवृक्षस्य नाम वै ।

## ❋ अर्जुनवृक्षनामानि ❋

अर्जुन[१] श्च नदीसर्जः[२], इन्द्रद्रु.[३] ककुभः[४] पुनः ॥१९९६॥
वीरतक[५] श्चेति नामानि, कथ्यन्ते ककुभस्य वै ।

## ❋ बिल्वनामानि ❋

शाण्डिल्य[१] श्रीफलो[२] विल्व[३], शैलूष[४] श्च प्रसिद्धकः ॥१९९७॥
मालूर[५] श्चेति नामानि, मन्यन्ते श्रीफलस्य वै ।

## ❋ कुरण्टकनामानि ❋

किङ्किरात[१] कुरुण्टक[२] कुरण्टकः[३] कुरण्डकः[४] ॥१९९८॥

## ❋ पलाशनामानि ❋

पलाश[१] किंशुक[२] पर्ण[३], वातपोथ[४] स्त्रिपत्रकः[५] ।
ब्रह्मपादप[६] नाम्नाऽत्र, पलाशः प्रथितो बुधैः ॥१९९९॥

## ❋ तालवृक्षनामानि ❋

तृणराज[१] स्तल[२] स्तालः[३], सर्वत्र ख्यात एव च ।

## ❋ कदलीनामानि ❋

कदलः[१] कदली[२] रम्भा[३], काष्ठीला[४] चांशुमत्फला[५] ॥२०००॥
मोचा[६] वै वारणबुसा[७], वारणबुषा[८] ऽपि ज्ञायताम् ।

## ❀ करवीरनामानि ❀

चण्डातो[1] हयमार[2] श्च, करवीर[3] प्रसिद्धकः ॥२००१॥
प्रतिहास[4] प्रतीहास[5], शतप्रासो[6] ऽपि कथ्यते ।

## ❀ कुटजनामानि ❀

कुटजो[1] वत्सक[2] शक्र[3], स्यात् तथा गिरिमल्लिका[4] ॥२००२॥

## ❀ वेतसनामानि ❀

वेतसो[1] वञ्जुलः[2] शीतो[3], विदुरो[4] विदुलो[5] रथ[6] ।
अभ्रपुष्प[7] श्च वानीरो[8], श्चेति नामानि सन्ति वै ॥२००३॥

## ❀ बदरीफलनामानि ❀

कोला[1] कोली[2] तथा कोलि[3], कुवली[4] बदरी[5] किल ।
कर्कन्धु[6] श्चापि कर्कन्धूः[7], श्चेति नामानि सन्ति वै ॥२००४॥

## ❀ कदम्बनामानि ❀

कदम्ब[1] प्रियको[2] नीपो[3], हरिप्रियो[4] हलिप्रियः[5] ।
धाराकदम्ब[6] नामाऽपि, राजकदम्ब[7] उच्यते ॥२००५॥

## ❀ सालवृक्षनामानि ❀

सालः[1] श्याल[2] स्तथा सर्जः[3], कार्श्य[4] कार्ष्यो[5] ऽश्वकर्णकः[6] ।
सस्यसंवर[7] नामा स, शस्यसवर[8] इत्यपि ॥२००६॥

## ❋ अरिष्टवृक्षनाम ❋

अरिष्टः[1] फेनिलो[2] नामा, -ऽरिष्टवृक्षस्य कथ्यते ।

## ❀ निम्बवृक्षनामानि ❀

ख्यातो निम्ब[1] स्तथाऽरिष्ट.[2], पिचुमर्द[3] श्च मालकः[4] ॥२००७॥

पिचुमन्द.[5] पुन र्हिङ्गु-निर्यास[7] नाम वै द्रुमः ।
सर्वतोभद्र[8] नामापि निम्बवृक्षस्य मन्यते ॥२००८॥

## ❀ पिचुलवृक्षनामानि ❀

पिचुलो[1] झाबुक[2] श्चैव, झावुक.[3] कथ्यते पुनः ।

## ❀ कर्पासनामानि ❀

कर्पास[1] श्चैव कर्पासी[2], कार्पासी[3] चापि बादरः[4] ॥२००९॥

पिचव्यो[5] बदरा[6] चेति, नामानि बादरस्य वै ।
पिचु[1] श्च तूलकं[2] नाम, पिचो र्वै कथ्यते बुधैः ॥२०१०॥

## ❋ कृतमालनामानि ❋

शम्याक[1] कृतमाल[2] श्चा -ऽऽरग्वधो[3] ऽरग्वधो[4] ऽर्वध[5] ।
राजवृक्ष[6] श्च शम्पाक[7], सम्पाक[8] श्चतुरङ्गुल[9] ॥२०११॥

अरेवत.[10] सुपर्णको[11], व्याधिधातः[12] सुवर्णकः[13] ।
एतन्नामानि कथ्यन्ते, कृतमालस्य कोविदैः ॥२०१२॥

## ❀ वाशिकानामानि ❀

वासको[1] वाशिका[2] वाशा[3], वासा[4] च वाजिदन्तकः[5] ।
वैद्यमाता[6] वृष[7] सिंही[8], सिंहास्यः[9] प्रसिद्धकः ॥२०१३॥

आटरूषो[10] ऽटरूष[11] श्चा, ऽटरूषको[12] ऽटरूषकः[13] ।
एतन्नामानि मन्यन्ते, वृषस्य विबुधै र्भुवि ॥२०१४॥

## ❀ करञ्जवृक्षनामनि ❀

करञ्जो[1] नक्तमाल[2] श्च, रक्तमाल[3] स्तथैव च ।
करज[4] श्चिरबिल्व[5] श्च, चिरिबिल्वो[6] ऽपि कथ्यते ॥२०१५॥

## ❀ स्नुहिनामानि ❀

स्नुहा[1] स्नुहि[2] र्व्रज[3] श्चैव महातरु[4] स्तथैव च ।
पुनः सिहुण्ड[1]-सीहुण्डौ[2], स्नुक्[1] तु स्नुही[2] गुडा[3] तथा ॥२०१६॥
समन्तदुग्धा[1] ऽपि भेद, स्नुहीवृक्षस्य मन्यते ।

## ❀ किम्पाकवृक्षनाम ❀

महाकाल[1] श्च किम्पाकः[2], किम्पाकस्याऽस्ति नाम वै ॥२०१७॥

## ❀ मन्दारनामानि ❀

मन्दारः[1] पारिभद्रकः[2], प्रख्यात पारिजातक[3] ।
चेति नामानि कल्पस्य, मिष्टनिम्बस्य वै पुनः ॥२०१८॥

## ❀ मधूकनामानि ❀

गुडपुष्पो[१] मधुष्ठीलो[२], वानप्रस्थो[३] मधुद्रुमः[४] ।
मधूको[५] मधुक[६] श्चेति, नामानि मधुकस्य वै ॥२०१९॥

## ❀ पोलुवृक्षनामानि ❀

पीलु[१] स्रंसी[२] सिन[३] श्चैव, गुडफलो[४]ऽपि कथ्यते ।

## ❀ गुग्गुलवृक्षनामानि ❀

गुग्गुलो[१] गुग्गुलु[२] कुम्भ.[३], कौशिक[४] श्च पलङ्कष[५] ॥२०२०॥
पुर[६] श्चोलूखलक[७] श्च, नामानि गुग्गुलस्य वै ।

## ❀ राजादननामानि ❀

राजादन[१] पियाल[२] श्च, प्रियाल[३] श्च धनु[४] पटः[५] ॥२०२१॥
राजातनो[६] धनु[७] श्चैव, सन्नकद्रुः[८] पट[९] पुनः ।
एतन्नामानि मन्यन्ते, राजादनद्रुमस्य वै ॥२०२२॥

## ❀ तिनिशवृक्षनामानि ❀

तिनिश[१] स्यन्दनो[२] नेमी[३], नेमि[४] स्तथाऽतिमुक्तक[५] ।
रथद्रुमो[६] रथद्रु[७] श्च, वञ्जुल[८] श्चापि चित्रकृत् ॥२०२३ ।
एतन्नामानि कथ्यन्ते, रथद्रुमद्रुमस्य वै ।

❀ नारङ्गवृक्षनामानि ❀

ऐरावत[1] श्च नारङ्गो[2], नागरङ्ग[3] प्रसिद्धक ॥२०२४॥

नार्यङ्ग[4] श्चेति नामानि, नागरङ्गनगस्य वै ।

❀ इङ्गुदीनाम ❀

इङ्गुदी[1] तापसद्रुमः[2] ख्यात श्च कथ्यते बुधै ॥२०२५॥

❀ काश्मरीवृक्षनामानि ❀

काश्मर्य[1] काश्मरी[2] चैव, कम्भारी[3] मधुपर्णिका[4] ।
श्रीपर्णी[5] सर्वतोभद्रा[6], भद्रपर्णी तथैव च ॥२०२६॥

गम्भारी[8] चेति नामानि, काश्मरीविष्टरस्य वै ।

❀ आम्लीकावृक्षनामानि ❀

आम्लीका[1] चाऽम्लिका[2] चिञ्चा[3],
चाऽम्लिका[4] तिन्तिली[5] तथा ॥२०२७॥

तिन्तिडी[6] चेति नामानि, मन्यन्ते तिन्तिडीतरो ।

❀ शेलुनामानि ❀

शेलु[1] श्लेष्मातक[2] सेलु[3], स्तरु भेद उदाहृत ॥२०२८॥

❀ असनवृक्षनामानि ❀

असन[1] श्चाऽऽसन[2] श्चैव, बन्धूकपुष्प[3]-जीवकौ[4] ।

प्रियकः[५] पीतसाल[६] श्च, सर्जकः[७] पीतसारक[८] ॥२०२९॥
एतन्नामानि मन्यन्ते, प्रियकपादपस्य वै ।

## ❀ पाटलिनामानि ❀

पाटला[१] पाटलि[२] श्चैव, मोघा[३] ऽमोघा[४] फलेरुहा[५] ॥२०३०॥
कृष्णवन्ता[६] कुबेराक्षी[७], कालास्थाली[८] तथैव च ।
काचस्थाली[९] च नामानि, पाटलेः सम्भवन्ति वै ॥२०३१॥

## ❀ भोजपत्रवृक्षनामानि ❀

भूर्ज[१] श्चर्मी[२] बहुत्वक्को[३], मृदुत्वक्[४] च मृदुच्छदः[५] ।
भोजपत्रवृक्षस्य च, नामान्येतानि सन्ति वै ॥२०३२॥

## ❀ कर्णिकारनामानि ❀

कर्णिकारः[१] परिव्याधो[२], द्रुमोत्पलो[३] ऽपि मन्यते ।

## ❀ निचुलनामानि ❀

इज्जलो[१] ऽम्बुजो[२] हिज्जलो[३], निचुलो[४] ऽपि हि कथ्यते ॥२०३३॥

## ❀ आमलकीनामानि ❀

आमलकी[१] शिवा[२] धात्री[३], तिष्यफला[४] तथाऽमृता[५] ।
वयस्था[६] चेति नामानि, शिवायाः सम्भवन्ति वै ॥२०३४॥

## ❀ बिभीतकनामानि ❀

कर्षफलो[1] कलिद्रुमो[2], बिभीतको[3] बिभेदकः[4] ।
भूतावास[5] स्तुषो[6] ऽक्ष[7] श्चे-ति नामानि तुषस्य वै ॥२०३५॥

## ❀ हरीतकीनामानि ❀

हरीतकी[1] च कायस्था[2], ऽव्यथा[3] शिवा[4] ऽभया[5] ऽमृता[6] ।
वयस्था[7] पूतना[8] पथ्या[9], चेतकी[10] श्रेयसी[11] तथा ॥२०३६॥
हैमवती[12] च नामानि, हरितक्या श्च सन्ति वै ।

## ❀ त्रिफलानाम ❀

प्रसिद्धा त्रिफला[1] नाम, फलत्रयस्य योगतः ॥२०३७॥

## ❀ तमालवृक्षनामानि ❀

कालस्कन्ध[1] स्तमाल[2] श्च, तापिञ्ज[3] श्च प्रसिद्धक ।
तापिच्छ[4] श्चापि तापिञ्छ[5], श्चेति नामानि सन्ति वै ॥२०३८॥

## ❀ चम्पकनामानि ❀

हेमपुष्पक[1] नामाय, चम्पा[2]-चाम्पेय[3]-चम्पका[4] ।

## ❀ सिन्दुकनामानि ❀

निर्गुण्डी[1] सिन्दुवार[2] श्च, सिन्दुकः[3] सिन्धुकः[4] पुन ॥२०३९॥
इन्द्रसुरस[5] रिन्द्रसु-रिस[6] रिन्द्राणिका[7] तथा ।

निर्गुण्टी[८] चापि निर्गण्ठी[९], चेति नामानि सन्ति वै ॥२०४०॥

❀ वासन्तीनामानि ❀

वासन्ती[१] माधवी[२] चापि, पुण्ड्रक[३] स्तथाऽतिमुक्तकः[४] ।
लता[५] चेति हि नामानि, वासन्त्या सम्भवन्ति वै ॥२०४१॥

❀ जपापुष्पनामानि ❀

औड्रपुष्पं[१] जपापुष्प[२]-मोड्रपुष्प[३] जपा[४] जवा[५] ।

❀ मालतीपुष्पनामानि ❀

जाति[१] स्तु मालती[२] जाती[३], सुमनाः[४] सुमना[५] तथा ॥२०४२॥

❀ मल्लिकापुष्पनामानि ❀

मल्लिका[१] तृणशून्यं[२] च, विचकिल[३] श्च भूपदी[४] ।
शतभीरु[५] स्तथा शीत-भीरु[६] र्नामानि सन्ति वै ॥२०४३॥

❀ सप्तलानामानि ❀

सप्तला[१] नवमल्लिका[२], तथैव नवमालिका[३] ।

❀ मागधीपुष्पनामानि ❀

मागधी[१] यूथिका[२] ऽम्बष्ठा[३], गणिका[४] पि च तद्भिदा ॥२०४४॥

हेमपुष्पिका[१] च पिताया, यूथिकाया भिदा स्मृता ।

## ❀ प्रियङ्गुनामानि ❀

प्रियङ्गुः[1] प्रियक[2] श्यामा[3], गुन्द्रा[4] गोवन्दनी[5] तथा ॥२०४५॥
विश्वक्सेना[6] च कारम्भा[7], लता[8] च महिलाह्वया[9] ।
गन्धफला[10] फली[11] नाम-गणनायां फलिनी[12] पुन. ॥२०४६॥

## ❀ बन्धूकनामानि ❀

रक्तको[1] बन्धूक[2] श्चैव, बन्धुको[3] बन्धुजीवकः[4] ।

## ❀ करुणनाम ❀

करुणो[1] मल्लिकापुष्पः[?], पुष्पस्यैव भिदा स्मृता ॥२०४७॥

## ❀ जम्बीरनामानि ❀

जम्बीरो[1] जम्बिरो[2] जम्भो[3], जम्भीरो[4] जम्भर[5] स्तथा ।
दन्तशठो[6] ऽपि जम्बल[7], श्चेति नामानि सन्ति वै ॥२०४८॥

## ❀ मातुलुङ्गनामानि ❀

रुचको[1] मातुलिङ्ग[2] श्च, मातुलुङ्ग[3] स्तथैव च ।
बीजपूर[4] श्च नामास्ति, फलपूरो[5] ऽपि मन्यते ॥२०४९॥

## ❀ करीरनामानि ❀

करीरः[1] क्रकर[2] श्चैव, ग्रन्थिलो[3] ऽपि हि कथ्यते ।

## ❀ एरण्डनामानि ❀

एरण्डो[१] व्याघ्रपुच्छ[२] श्च, चञ्चु[३] पञ्चाङ्गुल.[४] पुन. ॥२०५०॥
गन्धर्वहस्तको[५] मुण्डो[६], व्यडम्बको[७] व्यडम्बन[८] ।
रुवूको[९] रुवुक[१०] श्चैव, वर्द्धमान[११] श्च चित्रक[१२] ॥२०५१॥
रुचक[१३] उरुवूक[१४] श्च, ख्यात उरुवुक[१५] पुन ।
एतन्नामानि मन्यन्ते, पञ्चाङ्गुलस्य पण्डितै ॥२०५२॥

## ❀ धातकीनामानि ❀

अग्निज्वाला[१] सुभिक्षा[२] च, धातकी[३] धातुपुष्पिका[४] ।
नामान्येतानि कथ्यन्ते, पुनश्च धातृपुष्पिका[५] ॥२०५३॥

## ❀ कपिकच्छूनामानि ❀

कण्डूरा[१] कण्डुरा[२] ऽव्यण्डा[३], कपिकच्छू[४] र्जहा[५] ऽजहा[६] ।
ऋष्यप्रोक्ता[७] ऽऽत्मगुप्ता[८] च, मर्कटी[९] प्रावृषायणी[१०] ॥२०५४॥
शूकशिम्बा[११] तथा शूक-, शिम्बि[१२] श्च कपिकच्छुकः[१३] ।
नामान्येतानि मन्यन्ते, कण्डुराया श्च कोविदैः ॥२०५५॥

## ❀ धत्तूरनामानि ❀

धत्तूरो[१] धुतुरो[२] धूर्त्तो[३], धुस्तूरो[४] धुस्तुर[५] स्तथा ।
धूस्तूरो[६] मातुल[७] श्चैव, धुत्तूर.[८] कनकाह्वयः[९] ॥२०५६॥

उन्मत्त[10] कितव[11] श्चापि, प्रख्यातो मदनः पुनः ।
नामान्येतानि कथ्यन्ते, धत्तूरस्य हि पण्डितैः ॥२०५७॥

## ❀ कपित्थनामानि ❀

कपित्थो[1] मन्मथो[2] ग्राही[3], कबित्थो[4] ऽपि तथैव च ।
दधिफलो[5] दधित्थ[6] श्च, पुष्पफल[7] प्रसिद्धकः ॥२०५८॥
दन्तशठ[8] श्च नामानि, मन्यन्ते मन्मथस्य वै ।

## ❀ नालिकेरनामानि ❀

नालिकेरो[1] नारीकेलो[2], नारिकेल[3] श्च लाङ्गली[4] ॥२०५९॥
नारिकेरो[5] नारीकेलो[6], नारिकेलि[7] स्तथैव च ।
एतन्नामानि कथ्यन्ते, नालिकेरस्य कोविदैः ॥२०६०॥

## ❀ आम्रातकनामानि ❀

पीतनो[1] ऽम्रातक[2] श्चैव, वर्षपाकी[3] कपीतन[4] ।
आम्रातक[5] श्च नामानि, मन्यन्ते ऽम्रातकस्य वै ॥२०६१॥

## ❀ केतकनाम ❀

केतकः[1] केतकी नाम, कथ्यते क्रकचच्छदः ।

## ❀ कोविदारनामानि ❀

कुद्दालः[1] कोविदार[2] स्याद्, युगपत्र[3] श्चमरिकः[4] ॥२०६२॥

## ❀ सल्लकीनामानि ❀

शल्लकी[1] सल्लकी[2] श्चापि, सिल्लकी[3] सुवहा[4] रसा[5] ।
सुरभी[6] सुरभि[7] श्चापि, ह्लादिनो[8] ह्लादिनी[9] तथा ॥२०६३॥

कुन्दुरुकी[10] गजप्रिया[11], महेरुणा[12] महेरणा[13] ।
गजभक्ष्या[14] गजभक्षा[15], श्चेति नामानि सन्ति वै ॥२०६४॥

## ❀ वंशनामानि ❀

वशो[1] वेणु[2] श्च कर्मार[3], शतपर्वा[4] च मश्कर[5] ।
तृणध्वजो[6] ऽपि त्वक्सार[7], स्त्वचिसार[8] श्च तेजन[9] ॥२०६५॥

यवफल[10] श्च नामानि, वंशस्य कथयन्ति वै ।

## ❀ कीचकनाम ❀

प्रसिद्धः कीचको[1] नाम, स्वनन् वातात् स कथ्यते ॥२०६६॥

## ❀ वशक्षीरीनामानि ❀

वंशक्षीरी[1] तुकाक्षीरी[2], त्वक्क्षीरी[3] वंशरोचना[4] ।
एतन्नामानि मन्यन्ते, बुधै श्च वंशलोचना[5] ॥२०६७॥

## ❀ पूगनामानि ❀

पूगो[1] घोण्टा[2] गुवाक[3] श्च, गूवाक[4] खपुर.[5] पुनः ।
क्रमुक[6] श्चेति नामानि, पूगद्रुमस्य सन्ति वै ॥२०६८॥

## ❀ उद्वेगनाम ❀

उद्वेग[1] नाम प्रख्यात, पूगफलस्य मन्यते ॥२०६९॥

## ❀ नागवल्लीनामानि ❀

ताम्बूली[1] ताम्बूलवल्ली[2], नागपर्यायवल्ल्यपि ।
नागवल्ली[3] सर्पवल्ली[4], फणिलता[5] ऽपि कथ्यते ॥२०७०॥

## ❀ तुम्बीनामानि ❀

तुम्बी[1] तुम्बि[2] रलाम्बू[3] श्च, तुम्बा[4] ऽऽलाबु[5] स्तथैव च ।
लाबु[6] र्लाबू[7] स्तथा ऽलाबू[8], श्चाऽऽलाबः सन्ति वै पुनः ॥२०७१॥

## ❀ गुञ्जानामानि ❀

गुञ्जा[1] च कृष्णला[2] काक-चिञ्चो[3] काकाचिञ्चि[4] स्तथा ।
काकचिञ्चा[5] च नामानि, गुञ्जायाः कथयन्ति वै ॥२०७२॥

## ❀ द्राक्षानामानि ❀

द्राक्षा[1] मधुरसा[2] स्वाद्वी[3], गोस्तना[4] गोस्तनी[5] तथा ।
मृद्वीका[6] हारहूरा[7] च, द्राक्षानामानि सन्ति वै ॥२०७३॥

## ❀ गोक्षुरनामानि ❀

गोक्षुर[1] इक्षुगन्धा[2] च, श्वदंष्ट्रा[3] स्वादुकण्टक[4] ।
तथा स्थलशृङ्गाट[5] श्च, गोकण्टक[6] स्त्रिकण्टकः[7] ॥२०७४॥

प्रसिद्धो वनशृङ्गाटः[८], पलङ्कषा[९] पुन खलु।
एतन्नामानि मन्यन्ते, गोक्षुरस्य महीतले ॥२०७५॥

## ❀ गिरिकर्णीनामानि ❀

विष्णुक्रान्ता[१] तथा ऽऽस्फोटा[२], ऽऽस्फोता[३] चाप्यपराजिता[४]।
प्रसिद्धा गिरिकर्णी[५] चा, -ऽप्रतिहता[६] पुन र्भवेत् ॥२०७६॥

## ❀ व्याघ्रीनामानि ❀

कुली[१] व्याघ्री[२] स्पृशी[३] क्षुद्रा[४], निर्दिग्धिका[५] निदिग्धिका[६]।
प्रचोदनो[७] च दुःस्पर्शा[८], राष्ट्रिका[९] कण्टकारिका[१०] ॥२०७७॥
बृहती[११] चेति नामानि, कोविदाः कथयन्ति वै।

## ❀ गडूचीनामानि ❀

गडूची[१] गडुची[२] छिन्न-रुहा[३] जीवन्तिका[४] पुनः ॥२०७८॥
अमृता[५] सोमवल्ली[६] च, वत्सादनी[७] च तन्त्रिका[८]।
विशल्या[९] मधुपर्णी[१०] च नामानि दश सन्ति वै ॥२०७९॥

## ❀ इन्द्रवारुणीनामानि ❀

चित्रा[१] गवाक्षी[२] गोडुम्बा[३], विशाला[४] चेन्द्रवारुणी[५]।
एतन्नामानि मन्यन्ते, विशालाया श्च साक्षरैः ॥२०८०॥

## ❀ उशीरनामानि ❀

उशीरं[१] वीरणीमूलं[२], लामज्जकं[३] जलाशयम्[४]।

अभय[५] ऽसमृणाल[६] श्च, नलद[७] मिष्टकापथम्[८] ॥२०८१॥

सेव्य[९] तथाऽवदाह[१०] च, ख्यातं लघुलयं[११] पुन ।
नामान्येतानि मन्यन्ते, सेव्यस्य विबुधै खलु ॥२०८२॥

वीरतरं[१] च वीरण[२], नामापि कथ्यते पुन ।

❀ ह्रीवेरनामानि ❀

केशाम्बुनाम[१] चोदीच्य[२], ह्रीबेर[३] वालक[४] जलम्[५] ॥२०८३॥

बर्हिष्ठ[६] चापि प्रसिद्ध, केशजल क्वचिद् भवेत् ।

❀ प्रपुन्नाटनामानि ❀

प्रपुन्नाट [१] प्रपुन्नाड [२], प्रपुन्नाल[३] स्तथैव च ॥२०८४॥

पद्माट [४] प्रपुनाड[५] श्च, प्रपुनाल [६] प्रपुनड [७] ।
उरणाख्य[८] श्च दद्रुघ्नो[९], दद्रूघ्न[१०] श्चक्रमर्दक:[११] ॥२०८५॥

एडगज[१२] स्तथैव स्यादेलगज[१३] श्च व्याहृतौ ।
नामान्येतानि कथ्यन्ते, प्रपुन्नाटस्य पण्डितै ॥२०८६॥

❀ कुसुम्भनामानि ❀

लट्वा[१] वह्नि शिख[२] चैव, कुसुम्भ[३] कमलोत्तरम्[४] ।
महारजनं[५] नामाऽपि, कथ्यते कुसुम्भस्य वै ॥२०८७।

❀ लोध्रनामानि ❀

लोध्रो[१] रोध्र[२] स्तिरीट[३] श्च, शावर.[४] साबर[५] स्तथा ।

मार्जनो[६] गालव[७] स्तिलव[८], श्चेति नामानि सन्ति वै ॥२०८८॥

## ❀ कमलिनीनामानि ❀

कमलिनी[१] मृणालिनी[२], नलिनी[३] नडिनी[४] तथा ।
पुटकिनी[५] च पद्मिनी[६], पङ्कजिनी[७] सरोजिनी[८] ॥२०८९॥
बिसिनी[९] चेति नामानि, मन्यन्ते पण्डितै र्जनै ।

## ❀ कमलनामानि ❀

कमल[१] मऽरविन्दं[२] च, नालीकं[३] नलिनं[४] पुन ॥२०९०॥
पद्मं[५] बिसप्रसूत[६] च सरोजन्म[७] सरोरुहम्[८] ।
कुशेशय[९] सरोरुट्[१०] च, सरोजं[११] सरसीरुहम्[१२] ॥२०९१।
पुष्करं[१३] शतपत्रं[१४] च, पङ्कजं[१५] पङ्कजन्म[१६] च ।
पङ्करुट्[१७] पङ्करुह[१८] च, तामरसं[१९] महोत्पलम्[२०] ॥२०९२॥
ख्यातं विसप्रसूत[२१] च बिसप्रसून[२२] मित्यपि ।
जलज[२३] जलरुट्[२४] चैव, जलरुहं[२५] च वारिजम्[२६] ॥२०९३॥
जलजन्म[२७] च राजीवं[२८], सहस्रपत्र[२९] मित्यपि ।
एतन्नामानि मन्यन्ते, सामान्य कमलस्य वै ॥२०९४॥

## ❀ विशेषकमलनामानि ❀

पुण्डरीक सिताम्भोजं[१], श्वेतं कमल मुच्यते ।
कोकनदं[१] रक्तोत्पलं[२], भवेद्‌ रक्तसरोरुहम् ॥२०९५॥

कुमुदिनी[1] कुमुद्वती[2], कैरविणी[3] च तल्लता ।
कुवलय[1] कुवेल[2] च कुवं[3] च कुवल[4] पुनः ॥२०९६॥

उत्पल[5] चेति नामानि कुवलयस्य हि सन्ति वै ।
श्वेते तु तत्र कैरव[1], कुमुद[2] गर्दभाह्वयम्[3] ॥२०९७॥

कुमुद्[4] चेति नामाऽपि, चन्द्रोदयेन फुल्लति ।
नीले त्विन्दिवर[1] चेन्दी-वार[2] चेन्दीवर[3] तथा ॥२०९८॥

नीलाम्बुजन्म[4] नामापि नीलकमल मुच्यते ।
रक्तोत्पल[1] च हल्लकं[2], तदेव रक्तसन्ध्यकम्[3] ॥२०९९॥

एतत् पद्मं रक्तवर्ण, सायङ्काले प्रफुल्लति ।
सौगन्धिक[1] ञ्च कल्हार[2], शुक्ल सायं विकाशि तत् ॥२१००॥

## ❀ कर्णिकानामानि ❀

कर्णिका[1] बीजकोश[2] श्च, वराटको[3] ऽपि कथ्यते ।

## ❀ पद्मनालनामानि ❀

पद्मनालं[1] मृणाल[2] ञ्च, प्रख्यात तन्तुल[3] तथा ॥२१०१॥

विशं[4] बिस[5] विस[6] चेति, नामानि तन्तुलस्य वै ।

## ❀ केसरनामानि ❀

किञ्जलकं[1] केसरं[2] नाम, केशर [3] कर्णिकान्तिके ॥२१०२॥

## ❀ सर्वतिकानामानि ❀

संर्वतिका[1] नवं पत्रं, कथ्यते पण्डितै र्जनै ।
पुन र्नवदल[2] नाम, शरयन्त्रिक[3] मित्यपि ।।२१०३।।

## ❀ कन्दनामानि ❀

करहाटः[1] शिफा[2] कन्द[3], शिफाकन्द[4] श्च मूलभाक् ।

## ❀ शालूकनाम ❀

शालूक[1] मपि भेदोऽस्ति, पद्ममूलस्य नामनि ।।२१०४।।

## ❀ शेवालनामानि ❀

शेवालं[1] जलशूक[2] श्च, शेषालं[3] जलनोलिका[4] ।
शेफालं[5] जलनीली[6] च, शेवलं[7] शैवल[8] तथा ।।२१०५।।
शैवालं[9] चापि नीली[10] स्यु,-र्नामानि शैवलस्य वै ।

## ❀ धान्यनामानि ❀

धान्यं[1] सस्यं[2] तथा सीत्य[3], व्रीहि[4] स्तम्बकरि.[5] पुनः ।। २१०६।।

पाटलो[1] व्रीहि[2] राशुः[3] स्याद्, गर्भपाको[1] च षष्टिकः[2] ।
शालय[1] कलमाद्याः स्यु, कलम[1] श्च कलामकः[2] ।।२१०७।।

पुन ख्यातो महाशालि[1], सुगन्धिको[2] ऽपि कथ्यते ।
लोहितो[1] रक्तशालि.[2] श्च, नामतः प्रथितं भुवि. ।।२१०८।।

## ❀ विभिन्नधान्यनामानि ❀

यवो[1] हयप्रियो[2] लोके, तीक्ष्णशूक[3] श्च स स्मृतः ।
स एव हरित स्तोक्म[1], कथ्यते कोविदैः किल ॥२१०९॥

मङ्गल्यको[1] मसूर[2] स्यात्, सातीन[1] स्तु सतीनक[2] ।
कलाय[3] खण्डिक[4] श्चैव, हरेणु[5] स्त्रिपुट[6] पुनः ॥२११०॥

प्रसिद्ध श्चणक[1] श्चैव, हरिमन्थक[2] उच्यते ।
माष[1] श्च मदनो[2] वृष्यो[3], नन्दी[4] बीजवरो[5] वली[6] ॥२१११॥

एतन्नामानि मन्यन्ते, माषस्य हि महीतले ।
पुन र्मुद्गो[1] बलाट[2] श्च, प्रथनो[3] हरितो[4] हरि[5] ॥२११२॥

लोभ्य[6] श्चेति हि नामानि, पुनरत्र विशेषतः ।
पीते ऽस्मिन् शारद[1] श्चैव, खण्डीर[2] श्च जयो[3] वसुः[4] ॥२११३॥

प्रवेल[5] श्च पुनः कृष्णे, प्रवरो[1] हरिमन्थज[2] ।
वासन्त[3] शिम्बिक[4] श्चैव, वनमुद्गे निगूढकः[1] ॥२११४॥

कुलीनक[2] स्तथा खण्डी[3], तुवरक[4] प्रसिद्धकः ।
एतन्नामानि सर्वाणि, मुद्गस्य प्रथयन्ति वै ॥२११५॥

अथ वै राजमुद्ग[1] श्च, मकुष्ठको[2] मयुष्ठक[3] ।
मकुष्टको[4] मकूष्टको[5], मुकुष्टको[6] मयुष्टक[7] ॥२११६॥

मयष्टको[8] मपष्ठ[9] श्च, मपष्टको[10] मपुष्ठकः[11] ।
मपुष्ठ[12] श्चेति नामानि, मपुष्ठस्य भवन्ति वै ॥२११७॥

गोधूम[1] नाम प्रख्यात , सुमनो[2] ऽपि कथ्यते ।
वल्ल[1] स्तु शितशिम्बिक[2], सितशिम्बिक[3] उच्यते ॥२११८॥

निष्पाव[4] इति नामापि, वल्लस्य मन्यते बुधै ।
कुलत्थ[1] कालवृन्त[2] श्च, ताम्रवृन्ता[1] कुलत्थिका[2] ॥२११६॥

आढकी[1] तुवरी[2] ख्याता, वर्णा[3] चेत्यपि मन्यते ।
कुल्मासो[1] यावक[2] श्चैव, कुल्माषो[3] ऽपि कथ्यते ॥२१२०॥

नीवार[1] श्च वनव्रीहिः[2], स्याता श्यामाक[1] - श्यामकौ[2] ।
कङ्गु[1] श्च कङ्गुनी[2] कङ्गु[3], कङ्गू[4] श्च पितलण्डुला[5] ॥२१२१॥

प्रियङ्गु[6] श्चेति नामानि, कथ्यन्ते पण्डितै पुन ।
मधुका[1] कृष्णकङ्गु स्यात्, शोंधिका[1] रक्त कङ्गुनी ॥२१२२॥

मुसटी[1] श्वेतकङ्गु स्याद्, माधवी[1] पीतकङ्गुनी ।
उद्दाल.[1] कोद्रव[2] स्याच्च, कोद्रव.[3] कोरदूषक[4] ॥२१२३॥

चीनक[1] काकङ्गु[2] श्च, भेद कङ्गो रिह स्मृत ।

❀ यवनालनामानि ❀

विख्यातो यवनाल[1] श्च, योनलो[2] बीजपुष्पिका[3] ॥२१२४॥

जूर्णाह्वय[4] श्च, जोन्नाला[5], देवधान्य[6] तथैव च ।
मातुलानी[1] शण[2] भङ्गा[3], भवेदुमा[1] क्षुमा[2] ऽतसी[3] ॥२१२५॥

गवेडु[1] स्याद् गवेधु[2] श्च, गवीधूका[3] गवेधुका[4] ।

अरण्यज स्तिलः ख्यातो, जत्तिल[1] कथ्यते बुधै ॥२१२६॥

वन्ध्यं षण्ढतिल[1] स्याच्च, तिलादी पिञ्ज[1]-पेजकौ[2] ।
तन्तुभ[1] स्तुन्तुभो[2] लोके, सर्षप[3] स्यात् कदम्बक[4] ॥२१२७॥

श्वेतवर्णः सर्षप स्तु, सिद्धार्थ[1] श्वेतसर्षप[2] ।
शमीधान्य[1] मनेकस्य, मुद्गादे र्नाम मन्यते ॥२१२८॥

शूकधान्यं[1] यवादीना, नाम प्रख्यापित किल ।
सस्यशूक[1] ञ्च किंशारु, धान्याग्रो भाग उच्यते ॥२१२९॥

कणिश[1] कनिश[2] ञ्चेव कणिष:[3] सस्यशोर्षकम्[4] ।
सस्यमञ्जरी[5] नामापि, कथ्यते कनिशस्य वै ॥२१३०॥

स्तम्बो[1] गुच्छो[2] धान्यमूले, नाल[1] काण्डो[2] भवेत् पुन. ।
पलाल[1] श्च पलो[2] ऽफल , स्यात् तु वै धान्यत्वक् तुष:[1]॥२१३१॥

बुसे[1] कडङ्गरो[2] बुष[3], चेति नामानि सन्ति वै ।
आवसित[1] तथा धान्य[2], रिद्ध[3] माऽऽवासित[4] पुन. ॥२१३२॥

ऋद्ध[5] सिद्ध[6] सुसम्पन्न[7], चेति नामानि सन्ति हि ।
शूर्पादिना स्वच्छभूत, पूत[1] स्यान्निर्बुसीकृतम्[2] ॥२१३३॥

धान्ये परिष्कृते लोके., कथ्यते वहुलीकृतम्[3] ।

## ❀ मूलादिनामानि ❀

मूल[1] पत्रं[1] हि वृक्षादेः, प्रसिद्ध फलमित्यपि ॥२१३४॥
करीर[1] मस्ति वशस्या-ङ्कुरे ऽग्र पूर्वभागत. ।

काण्ड[1] मेरण्डवंशादौ, विरूढ·[1] स्यात् फलाङ्कुरे ॥२१३५॥

विरुढका[2] ऽपि प्रख्यात, तदर्थे कथ्यते बुधै ।
तालबीजे ऽविरूढकं[1], त्वक् कदल्यां निरीक्ष्यताम् ॥२१३६॥

करीरादिद्रुमपुष्पं, पुष्पं[1] हि कथ्यते पुनः ।
भूच्छत्राकस्य कन्दं वै, कवक[1] मन्यते बुधै. ॥२१३७॥

शाकं[1] च शिग्रुकं[2] चेति, दशधा खाद्य वस्तुनि ।

❀ शाकविशेषनामानि ❀

मेघनाद[1] स्तण्डुलीय[2], स्तण्डुलेरो[3] ऽल्पमारिष.[4] ॥२१३८॥

रक्तफला[1] तथा तुण्डि-केरो[2] च तुण्डिकेरिका[3] ।
तुण्डिकेशी[4] तथा बिम्बी[5], पीलुपर्णी[6] च सन्ति वै ॥२१३९॥

जीवन्ती[1] जीवनीया[2] च जीवा[3] च जीवनी[4] पुन ।
मधु[5] मधुस्रवा[6] श्रवा[7], चेति नामानि सन्ति वै ॥२१४०॥
वास्तूकं[1] वास्तुकं[2] चैव, क्षारपत्र[3] प्रसिद्धकम् ।
क्षीरपत्र[4] पुन श्चेति, नामानि कथयन्ति वै ॥२१४१॥

पालक्या[1] नाम प्रख्यातं, तथैव मधुसूदनी[2] ।

❀ लशुननामानि ❀

लशूनं[1] लशुनो[2] ऽरिष्टो[3], महाकन्दो[4] महौषधम्[5] ॥२१४२॥

रसोनो[6] म्लेच्छकन्द[7] श्च, सप्त नामानि सन्ति वै ।

दीर्घपत्रक[1] नामापि, रसोनो[2] गृञ्जनो[3] भवेत् ॥२१४३॥

### ❀ भृङ्गराजनामानि ❀

भृङ्गरजो[1] भृङ्गराजो[2], मार्कवः[3] केशरञ्जन[4] ।

### ❀ विभिन्नशाकनामानि ❀

वायसी[1] काकमाची[2] च, शाकार्थे षु विशेषतः ॥२१४४॥

प्रसिद्ध कारवेल[1] श्च, कटल्लक[2] स्तथैव च ।
कटिल्लकः[3] कठिल्लक[4], सुषवी[5] सुसवी[6] पुनः ॥२१४५॥

कूष्माण्डक[1] श्च कर्कारु[2], कोशातकी[1] पटोलिका[2] ।
चिर्भटी[1] चिर्भिटी[2] चैव, वालुङ्की[3] कर्कटी[4] तथा ॥२१४६॥

एर्वारु[5] स्त्रपुसो[6] चोर्वारु[7] श्चोर्वालु[8] पुनः खलु ।
एर्वालु[9] श्चेति नामानि, कर्कटयाः कथयन्ति वै ॥२१४७॥

सूरणः[1] सुरणः[2] कन्दो[3], भवेदर्शोघ्न[4] इत्यपि ।
प्रसिद्धमाऽऽर्द्रक[1] चैव श्रृङ्गबेरक[2] मुच्यते ॥२१४८॥

तिक्तपत्र[1] किलासघ्नः[2], कर्कोटक[3] सुगन्धक[4] ।

सेकिम[1] हरिपर्ण[2] च, मूलक[3] हस्तिदन्तकम्[4] ॥२१४९॥

### ❀ तृणादिनामानि ❀

तृणं[1] नडादि नीवारा-दिकं शष्पं[1] तु तन्नवम् ।
कत्तृण[1] रौहिषं[2] पौर[3], देवजग्धं[4] सौगन्धिकम्[5] ॥२१५०॥

दर्भः[1] कुथः[2] कुशो[3] बर्हिः[4], पवित्र[5] नाम पञ्चमम् ।
तेजन[1] स्तु शरो[2] गुन्द्रो[3], मुञ्जो[4] नाम चतुर्थकम् ॥२१५१॥

हरिताली[1] रुहा[2] ऽनन्ता[3], दूर्वा[4] च शतपर्णिका[5] ।
तथा सहस्रवीर्या[6] च, भार्गवी[7] शतपर्विका[8] ॥२१५२॥

पोटगल[1] स्तु प्रख्यातो, धमन[2] श्च नडो[3] नलः[4] ।
मेघनामा[1] स्तु वै मुस्ता[2], कुरुविन्द[3] श्च मुस्तकः[4] ॥२१५३॥

गुन्द्रा[1] तु सोत्तमा ख्याता, स्यादपि भद्रमुस्तकः[2] ।
उलपो[1] बल्वजा[2] चैवं, भवेत् कोमलघासकं ॥२१५४॥

## ❀ इक्षुनामानि ❀

अथेक्षुः[1] स्याद् रसाल[2] श्च, प्रख्यातोऽप्यसिपत्रकः[3] ।

## ❋ इक्षुभेदनामानि ❋

कान्तारः[1] कोषकार[2] श्च, पुण्ड्र[3]-पुण्ड्रक[4]-पौण्ड्रका[5] ॥२१५५॥

ईक्षो र्मूलस्य नामात्र, मोरटं[1] मन्यते बुधैः ।
काशः[1] कास[2] मिषोका[3] च, तृणभेदोऽपि कथ्यते ॥२१५६॥

यवसं[1] चापि घासः[2] स्यात्, तृण[1] मऽर्जून[2]मेव च ।

## ❋ विषनामानि ❋

विष[1] स्तीक्ष्ण[2] रसः[3] क्ष्वेडो[4], गरलो[5] ऽपि च नाम वै ॥२१५७॥

## ❀ स्थावरविपविशेपनामानि ❀

कालकूट [1] श्च काकोल [2], कर्दम [3] करवीरकः[4] ।
शृङ्गिक [5] शौल्किकेय[6] श्च, सक्तुको[7] मधुसिक्थक.[8] ॥२१५८॥

मकटो[9] मुस्तक [10] कुष्ठो[11], मेषशृङ्ग[12] श्च[13] मूलक [14] ।
गौराद्रक[15]श्च कालिङ्गो[16], कैराटक[17]श्च गौतमः[18] ॥२१५९॥

इन्द्र[19] श्चाङ्कोल्लसार[20]श्च, लाङ्गुलिक[21] श्च पिङ्गलः[22] ।
वालूको[23] वत्सनाभ[24] श्च
विस्फुलिङ्ग[25] श्च दालवः[26] ॥२१६०॥

हालहलं[27] चाऽहिछत्रो[28], हालाहलं[29] हलाहलः[30] ।
सर्षपो[31] ब्रह्मपुत्र[32] श्च, प्रदीपन[33] श्च नन्दन.[34] ॥२१६१॥

सारोष्ट्रिकः[35] सौराष्ट्रिकः[36], हैमवत[37] स्तथैव च ।
एता सर्वा हि मन्यन्ते-स्थावरा विषजातय ॥२१६२॥

कुरण्ट परिभद्रादि[1]-रग्रबीजेषु गण्यते ।
उत्पलः सुरणादि श्च[2], मूलजेषु च मन्यते ॥२१६३॥

इक्षु-वंश-तृणेत्यादिः, पर्वयोनिज[3] उच्यते ।
सल्लकी वटवृक्षादिः, स्कन्धजेषु[4] विभाज्यताम् ॥२१६४॥

शालि-षष्टिक-मुद्गादि-बीजै[5] रुत्पद्यते सदा ।
तृण-भूच्छत्रनामादिः, सम्मूर्छज[6] उच्यताम् ॥२१६५॥

षडेताश्च वनस्पति-कायस्य मूलजातयः ।

प्रसिद्धाः सर्वदा लोके, कोविदाः कथयन्ति वै ॥२१६६॥

॥ इति वनस्पतिकायः समाप्तः ॥

॥ इति एकेन्द्रियजीवा समाप्ता. ॥

## ❋ अथ द्वीन्द्रियजीवनामानि ❋

### ❋ कायाभवाःकीटनामानि ❋

कृमि[1] र्नीलाङ्गु[2]-र्नीलङ्गू[3], शरीरान्तर वर्तिनः ।
क्षुद्रकीटो[1] बहिश्चारी, पुलका[1] उदरे बहिः ॥२१६७॥

कीकसा.[1] लघुकाया स्ते, काष्ठकीटो[1] घुरण.[2] स्मृत. ।

### ❋ पृथ्वीभवाकीटनामानि ❋

कुसूः[1] किञ्चिलकः[2] किञ्चु-लकः[3] किञ्चुलुकः[4] पुनः ॥२१६८॥

ख्यातो गण्डूपद[5] स्यु र्वै, भूलता[6] ऽपि महीलता[7] ।
शिली[1] गण्डूपदी[2] नाम, गण्डुल. कथ्यते बुधै. ॥२१६९॥

### ❋ जलौकानामानि ❋

जलौका[1] च जलालोका[2], जलूका[3] जलसर्पिणी[4] ।
जलोकसो[5] ऽस्रपाः[6] सन्ति, रक्तपाः[7]विचका.[8] पुनः ॥२१७०॥

### ❋ शुक्तिनामानि ❋

शुक्ति.[1] स्यादब्धिमण्डूकी[2], मुक्तस्फोटो[3] ऽपि मन्यते ।

### ❀ शङ्खनामानि ❀

त्रिरेखः[1] षोडशावर्त्तः[2], शङ्खो[3] भवति वारिजः[4] ॥२१७१॥

क्षुल्लका[1] क्षुद्रशङ्खा[2] श्च, शङ्खनखा[3] स्तथैव च ।
शङ्खनका[4] स्तथा क्षुद्र-कम्बव[5] संभवन्ति वै ॥२१७२॥

शम्बवः[1] शम्बुका[2] श्चैव, शम्बूकाः[3] शाम्बुका[4] पुनः ।
नामान्येतानि मन्यन्ते, जलमात्र भवानि वै ॥२१७३॥

### ❀ कपर्दनामानि ❀

वराटको[1] हिरण्य[2] श्च, कपर्द[3] श्च कपर्दकः[4] ।
श्वेत[5] परणास्थिक[6] श्चेति, नामानि कथयन्ति वै ॥२१७४॥

### ❀ जलूकासदृश जलचरजन्तुनामानि ❀

दीर्घकोशा[1] च दुसज्ञा[2], दुर्नामा[3] ऽपि कथ्यते ।
दुर्नाम्नी[4] चेति नामापि, पण्डितै रिह मन्यते ॥२१७५॥

॥ इति द्वीन्द्रियजीवाः समाप्ता. ॥

### ❀ अथ त्रीन्द्रियजीवनामानि ❀

अथ वै त्रीन्द्रियानाह, पीलकः[1] स्यात् पिपीलकः[2] ।
हीनाङ्गी[1] पीपिलीका[2] स्यात्, ब्राह्मणी[1] स्थूलशीर्षिका[2] ॥२१७६॥

घृतेली[1] नाम प्रख्यात, पिङ्गकपिशा[2] तथैव च ।

उपजिह्वो[1]-पदीका[2] स्यात्, वम्री[3] तथोपदेहिका[4] ॥२१७७॥

रिक्षा[1] लिक्षा[2] प्रसिद्धा ऽस्ति, यूका[1] तु षट्पदी[2] पुनः ।
ख्यात नाम महाभीरु [1], गोपालिका[2] ऽपि नाम वै ॥२१७८॥

गर्दभो[1] गोमयोत्था[2] स्यात्, मत्कुण[1] स्तु प्रसिद्धक ।
उद्दंश [2] किटिभः[3] श्चापि वै, कोलकुण[4] स्तथोत्कुणः[5] ॥२१७९॥

अग्निको[1] ऽग्निरज[2] श्चैव, वैराट[3] स्तित्तिभ.[4] पुन ।
इन्द्रगोप[5] श्च नामानि, मन्यन्ते तित्तिभस्य वै ॥२१८०॥

ख्याता कर्णजलूका[1] च, कर्णकीटा[2] ऽपि कथ्यते ।
तथा कर्णजलौका.[3] स्यात्, शतपदी[4] च मन्यते ॥२१८१॥

पुनः कर्णजलौका.[5] ऽपि, कथ्यते कोविदै किल ।
एते त्रीन्द्रियजीवा स्तु, वर्तन्ते हि महीतले ॥२१८२॥

॥ इति त्रीन्द्रियजीवा समाप्ताः ॥

## ❋ अथ चतुरिन्द्रियजीवनामानि ❋

### ❀ लूतानामानि ❀

ऊर्णनाभ.[1] क्रिमिः[2] कृमिः[3], मर्कटक[4] स्तथा ऽष्टपाद्[5] ।
लालास्राव[6] श्च लूता[7] च, जालिको[8] जालकारक.[9] ॥२१८३॥

प्रख्यात स्तन्त्रवाय[10] श्च, तन्तुवाय[11] स्तथैव च ।
सर्व नामानि लूतायाः, मन्यन्ते पण्डितै र्जनै. ॥२१८४॥

## ❀ वृश्चिकनामानि ❀

वृश्चिक[1] श्च द्रुणो[2] द्रोण[3], श्चाऽऽलि[4] राली[5] ह्यलि[6] र्द्रुतः[7] ।
अल[1] वृश्चिक[2] पुच्छाग्र[3], कण्टकं विषवाहकम् ॥२१८५॥

## ❀ भ्रमरनामानि ❀

भ्रमरो[1] भसलो[2] भृङ्गो[3], द्विरेफो[4] मधुकृत्[5] पुन· ।
मधुकर[6] श्च रोलम्ब[7], श्चञ्चरीक[8] शिलीमुखः[9] ॥२१८६॥

अलि[10] रिन्दिन्दिर[11] श्चाऽली[12], षट्चरण[13] श्च षट्पदः[14] ।
षडङ्घ्रि[15] श्चेति नामानि, मन्यन्ते भ्रमरस्य वै ॥२१८७॥

तद्भोज्य पुष्प-मधुनी, तस्मान् मधुव्रत[1] श्च सः ।
पुष्पन्धय[2] श्च पुष्पलिट्[3], मधुपो[4] मधुलिट्[5] तथा ॥२१८८॥

## ❀ खद्योतनामानि ❀

खद्योतो[1] ध्वान्तचित्र[2] श्च, ज्योतिर्माली[3] तमोमणिः[4] ।
कीटमणि[5] स्तथा ज्योति-रिङ्गण[6] श्च परार्बुदः[7] ॥२१८९॥

पुनर्निमेषद्युत्[8] चेति, नामानि कथयन्ति वै ।

## ❀ पतङ्गनाम ❀

पतङ्ग[1] शलभ[2] ख्यातो, दीपज्योतिषि भ्राम्यति ॥२१९०॥

## ❀ मधुमक्षिकानामानि ❀

मधुच्छत्रे बसेत् क्षुद्रा[1], सरघा[2] मधुमक्षिका[3] ।

## ❀ मधुनामानि ❀

माक्षिकं[१] भ्रामरं[२] दालं[३], क्षौद्रं[४] मौद्दालकं[५] मधु[६] ॥२१६१॥
छात्रक[७] पौत्तिकं[८] चाऽर्घ्यं[९], चेति नामानि सन्ति वै ।

## ❀ मधूच्छिष्टनामानि ❀

सिक्थक[१] श्च मधूच्छिष्टं[२], मदनं[३] नाम बुध्यताम् ॥२१६२॥

वर्वणा[१] मक्षिका नीला, कृष्णाऽपि कथ्यते पुनः ।
पतङ्गिका[१] च पुत्तिका[२], मन्यते लघुमक्षिका ॥२१६३॥

वनमध्येऽधिका जाता -दंश[१] स्तु वनमक्षिका[२] ।
तज्जाति रल्पिका दंशी[१], कथ्यते कोविदैः सदा ॥२१६४॥

तैलाटी[१] वरटा[२] सैव, गन्धोली[३] वरटी[४] भवेत् ।

## ❀ झिल्लीकानामानि ❀

चीरी[१] च चीरुका[२] चैव, झीरिका[३] झिरिका[४] तथा ॥२१६५॥

झिरीका[५] झीरुका[६] चैव, झिरूका[७] झिल्लका[८] पुनः ।
झिल्लीका[९] झिल्लिका[१०] भृङ्गा-रिका[११] वर्षकरी[१२] तथा ॥२१६६॥

भृङ्गारी[१३] चेति नामानि, मन्यन्ते पण्डितै र्जनै ।
इत्युक्ता श्चतुरिन्द्रिया, जीवाः येऽत्र महीतले ॥२१६७॥

॥ इति चतुरिन्द्रियजीवाः समाप्ताः ॥

## ※ अथ पञ्चेन्द्रियजीवनामानि ※

तत्र

### ※ स्थलचरपञ्चेन्द्रियजीवनामानि ※

पशु[1] स्तिर्यङ्[2] चरि[3] हिस्रे, ऽस्मिन् व्याल [1] श्वापद[2] श्च वै ।

### ※ गजनामानि ※

गजो[1] मतङ्गजो[2] गर्जो[3], मातङ्ग[4] श्च महामृग[5] ॥२१९८॥

हस्ती[6] दन्ती[7] जटी[8] नागो[9], महाकायो[10] महामद:[11] ।
इभ [12] कुम्भी[13] जलाकाङ्क्ष[14],
सिन्धुर:[15] षष्टिहायन [16] ॥२१९९॥

द्विप[17] श्चाऽनेकप:[18] पद्मो[19], पुष्करी[20] पेचकी[21] कपि [22] ।
पेचिल [23] सूर्पकर्ण[24] श्च, करेणु [25] सूचिकाधर:[26] ॥२२००॥

अन्त स्वेद[27] स्तथा दीर्घ-पवनो[28] वारणो[29] ऽसुर [30] ।
स्तम्बेरम[31] श्च शुण्डालो[32], दन्तावल[33] श्च कुञ्जर[34]॥२२०१॥

पीलु[35] विलोमजिह्व[36] श्च, करि[37] श्च करटी[38] करी[39] ।
द्विरद[40] सामयोनि[41] श्च, नामानीति गजस्य वै ॥२२०२॥

करिणी[1] हस्तिनी[2] कर्ण-धारिणी[3] धेनुका[4] वशा[5] ।
गणिका[5] वासिता[6] चेति, नामानि हि गजस्त्रिया ॥२२०३॥

भद्रो[1] मन्दो[2] मृगो[3] मिश्र[4], श्चेति चतस्रोजातय ।

महाकायस्य मन्यन्ते, विश्वे च वर्त्तयन्तिता· ॥२२०४॥

काले ऽप्यजातदन्त श्च, स्वल्पाङ्ग स्यात् च मत्कुणो[1] ।
पञ्चवर्षो द्विपो बाल [1] पोतः[1] स्याद् दशवर्षकः ॥२२०५॥

पिक्को[1] त्रिक्क[1] श्च मातङ्गो, विंशतिवर्ष उच्यते ।
कलभो[1] ऽपि त्रिशद्वर्ष, कथ्यते कोविदै किल ॥२२०६॥

यूथनाथ[1] स्तथा यूथ-पति [2] स्याद् यूथनायक. ।
प्रभिन्नो[1] गर्जितो[2] मत्तो[3], मदोन्मत्तो ऽपि मन्यते ॥२२०७॥

ख्यातो मदोत्कटः[1] स्याच्च, मदकलो[2] ऽपि वै पुन ।
उद्वान्तो[1] निर्मद[2] श्रोक्तो, मदशून्यगजो हि तद् ॥२२०८॥

कल्पित [1] सज्जित[2] श्चैव, युद्धाय चलिते गजे ।
परिणत[1] स्तिर्यग्घाती[2], तिर्यक् प्रहारकर्त्तरि ॥२२०९॥

व्याडो[1] दुष्टगजो[2] व्याल [3], उपद्रवकरे गजे ।
तथा गम्भीरवेदी[1] स्याद्, चाऽवमताङ्कुश [2] किल ॥२२१०॥

प्रख्यात उपवाह्य[1] श्च राजवाह्य[2] स्तथैव च ।
औपवाह्यो[3] ऽपि कथ्यते, नृपस्यारोहणाय वै ॥२२११॥

सन्नह्य [1] समरोचित [2], सङ्ग्राम योग्य कुञ्जरे ।
ईषादन्त[1] उदग्रदन्[2], लम्बदन्तो गजो भवेत् ॥२२१२॥

गजानां समुदाये तु, हास्तिकं[1] गजता[2] घटा[3] ।
मदो[1] दान[2] प्रवृत्ति[3] स्तु, उन्मत्तगजगण्डनम् ॥२२१३॥

गजशूण्डजलविन्दौ-वमथु[1] करशीकरः[2] ।
हस्तिनासा[1] करो[2] हस्त[3], शुण्डा[4] च गजनासिका ॥२२१४॥

शुण्डाग्र पुष्कर[1] ज्ञेयं. कर्णिका[1] तु गजाङ्गुलि ।
विषाणौ[1] गजदन्तौ स्तां. स्कन्ध आसन[1] मुच्यते ॥२२१५॥

चूलिका[1] कर्णमूल[2] स्याद्, गजकर्णस्य मूलके ।
इषाका[1] चेषिका[2] चाऽक्षि-कूटक[3] नेत्रगोलके ॥२२१६॥

ईषिका[4] पुन रीषीका[5], चेति नामानि सन्ति वै ।
अपाङ्गदेशो निर्याण[1], स्यात् गण्ड[1] स्तु कट[2] स्तथा ॥२२१७॥

करट[3] श्चेति नामापि, गण्डस्थलस्य वर्तते ।
अवग्रहो[1] ऽवग्राह[2] श्च, द्वयमिद हि भालके ॥२२१८॥

कुम्भयोरध आरक्षो[1], नाम वै कथ्यते किल ।
कुम्भौ[1] तु शिरस पिण्डौ विदु[1] कुम्भयोर्मध्यकम् ॥२२१९॥

तस्याधो वातकुम्भ.[1] स्यात्. वाहित्थ[1] च ततोऽप्यधः ।
प्रतिमान[1] वाहित्थाधः, पेचक[1] पुच्छमूलकम् ॥२२२०॥

गजस्य तु पुरोभागो, दन्तभागो[1] हि कथ्यते ।
पार्श्वक पक्षभाग[1] श्च, मन्यते पण्डितै पुन ॥२२२१॥

पूर्वो जङ्घादिदेशो हि, गात्र[1] गजस्य कथ्यते ।
तस्य स्यात् पश्चिमे भागे. ह्यपरा[1] चाऽवरा[2] ऽवरम्[3] ॥२२२२॥

गज चर्मणि रक्तबिन्दु., पद्म[1] पद्मक[2] मुच्यते ।

मातङ्गस्य पुन प्रोक्तं, चरणबन्धनमत्र ॥२२२३॥

अन्दुको[1] ऽन्दू[2] श्च हिञ्जीरो[3], निगडो[4] निगलः[5] पुन ।
प्रसिद्ध शृङ्खल[6] श्चैव, पादपाशो[7] ऽपि मन्यते ॥२२२४॥

गजस्य बन्धनस्थान, वारि[1] र्वारी निगद्यते ।
त्रिपदी[1] गात्रयो र्बन्ध, एकस्मिन्नपरे ऽपि च ॥२२२५॥

वेणुकं[1] वेणुकं[2] तोत्रं[3], वेणुकस्येति नाम वै ।
आलान[1] नाम मातङ्ग-बन्धस्तम्भ श्च मन्यते ॥२२२६॥

सृणि[1] शृणि[2] रङ्कुश[3] श्च, स्यादपष्ठं[1] तदग्रभाक् ।
अङ्कुशवारणं यातं[1], कथ्यते पण्डितै र्पुनः ॥२२२७॥

यतं[1] नाम प्रसिद्ध स्यात्, पादकर्म निषादिनाम् ।
वीत[1] पुन स्तदेवास्ति, निषादिपाद चालनम् ॥२२२८॥

कक्ष्या[1] दूष्या[2] वरत्रा[3] च, चूष्या[4] स्याच्चर्म रज्जुका ।
गजगले बन्धन स्यात् कण्ठबन्धः[1] कलापक[2] ॥२ २९॥

❀ अश्वनामानि ❀

अश्वः[1] सप्ति[2] र्हयो[3] हेषी[4], हरि[5] र्वाह[6] श्च हंस[7] इति ।
अर्वा[8] वाजी[9] तथा किण्वी[10], क्रमणः[11] सिंहविक्रम[12] ॥२२३०॥

केशरी[13] केसरी[14] कुण्डी[15], कुटर[16] पालक[17] पुनः ।
घोटक[18] स्तुरग[19] स्तार्क्ष्य[20], स्तुरङ्ग[21] श्च तुरङ्गमः[22] ॥२२३१॥

गन्धर्व[23] श्चामरी[24] प्रोथी[25], माषाशी[26] च मरुद्रथ[27] ।

मुद्गभुग्[२८] मुद्गभुज्[२९] चैव, मुहुर्भुग्[३०] गूढभोजन[३१] ॥२२३२॥

परुल[३२] शालिहोत्र[३३] श्च, लक्ष्मीपुत्र[३४] प्रकीर्णकः[३५] ।
एकशफ[३६] स्तथा वासु-देव[३७] श्च ग्रहभोजन[३८] ॥२२३३॥

अश्वस्य सर्व नामानि, कथितानि मयोपरि ।

## ❀ अश्वानामानि ❀

अश्वा[१] ऽर्वती[२] प्रसू[३] र्वामी[४], वडवा[५] सभवन्ति वै ॥२२३४॥

## ❀ अश्वभेदाना नामानि ❀

अल्पावस्थ. किशोर[१] स्याज्जवन[१] स जवाधिक ।
रथवोढा स रथ्य. स्यादा ऽऽजानेय कुलीन[२] इति ॥२२३५॥

सैन्धवा[१] सिन्धुदेशीया स्तथान्ये देश देशजाः ।
वानायुजा[१] पारसीकाः[१], काम्बोजा[१] श्च वाह्लिका.[१] ॥२२३६॥

वाह्लीका[२] अपि तद्भेदाः, तुषाराः[१] सन्ति तद्भिदा ।
साधुवाही[१] विनीत[२] स्याद्, दुर्विनीत स्तु शूकल.[१] ॥२२३७॥

कश्य[१] नामा कशार्ह स्यात्, पुनः श्रीवृक्षकी[१] हयः ।
हृद्वक्त्रावर्त्ती[२] चापि, कथ्यते कोविदै किल ॥२२३८॥

पञ्चभद्र[१] स्तु हृत्पृष्ठ-मुखपार्श्वेषु पुष्पितः ।
पुच्छोर. खुरकेशास्यैः, सितैः ख्यातोऽष्टमङ्गल[१] ॥२२३९॥

श्वेताश्वे कर्क[१]-कोकाहौ[२], खोङ्गाह[१] श्वेतपिङ्गले ।

सुधावर्णे च सेराह [1], स्यात् पीते हरियो[1] हये ॥२२४०॥

खुङ्गाहः[1] कृष्णवर्णे स्यात्, क्रियाहो[1] लोहिताश्वके ।
पुन श्च नीलको[1] नामा, ऽऽनीलाश्वे मन्यते बुधै. ॥२२४१॥

कपिलवर्णो त्रियूहो[1] ऽश्वः, कथ्यते कोविदै खलु ।
वोल्लाह[1] स्त्वयमेवस्ति, पाण्डुकेशरवालधि ॥२२४२॥

उराहो[1] ऽश्वो मनाक् पाण्डुः, कृष्णजङ्घो भवेद् यदि ।
पुन सुरूहक[1] कोऽपि, गर्दभाभो हि मन्यते ॥२२४३॥

पाटलो वोरुखान [1] स्यात्, कृष्ण स्तु यदि जानुनि ।
मनाक् पीत कुलाहाख्य [1], कथ्यते पण्डितै. किल ॥२२४४॥

उकनाहाभिधः[1] पीत-रक्तच्छाय स एव हि ।
कृष्णरक्तच्छवि. प्रोक्त., क्वचिदिति बुधै रिह ॥२२४५॥

कोकनदच्छवि शोण [1], स्याद् हरिक[1] श्च हालक.[2] ।
पीतहरितच्छायो वै, कथ्यते पण्डितै रिह ॥२२४६॥

पङ्गुल [1] श्वेतकाचाभो, हलाह[1] श्चित्रितो हरि. ।
श्वेतनयनवानश्वो, मल्लिकाक्ष [1] प्रकथ्यते ॥२२४७॥

इन्द्रायुधो भवेन्नाम श्याम नेत्रवतः किल ।
ककुदी[1] ककुदावर्त्तो[2], विशिष्टावर्त्तवान् हय· ॥२२४८॥

इन्द्र वृद्धिके[1] नामास्ति, निर्मुष्को घोटकः पुन· ।
अश्वमेधयज्ञस्याश्वो, ऽश्वमेधीय[1] स्तथा ययुः[2] ॥२२४९॥

अश्वस्य नासिका प्रोथं[1], कश्य[1] तु मध्यभागकम् ।
गलोद्देशो निगाल[1] स्यात्, खुरा[1] शफा[2] भवन्ति वै ॥२२५०॥

अथ पुच्छ च लाङ्गूल[2], लाङ्गुल[3] लूम[4] वालधिः[5] ।
वालहस्त[6] श्चेति नामानि, पुच्छस्य सभवन्ति वै ॥२२५१॥

अपावृत्त[1] परावृत्तं[2], लुठितं[3] वेल्लित[4] पुन ।
भूमावलोटन तस्य, श्रमो येन विनश्यति ॥२२५२॥

धोरित[1] वल्गित[2] प्लुतो[3]-त्तेजितो[4]-त्तेरितानि[5] च ।
गतय पञ्च धारा[1]-ख्या., घोटकानां क्रमादिमा: ॥२२५३॥

गमन नकुलस्येव, धौरितक[1] निगद्यते ।
कङ्कस्येव गमनं-धौर्यं[2] भवति ज्ञायताम् ॥२२५४॥

गमन मयूरस्येव, धोरण[3] नाम जायते ।
गमन डुक्करस्येव, धोरित[4] च निगद्यते ॥२२५५॥

पुन श्च वाल्गित[1] नाम, कथ्यते ह्यत्र कोविदै ।
अग्रकायसमुल्लासात् कुञ्चितास्यं नतत्रिकम् ॥२२५६॥

पक्षिमृग समं यानं, प्लुत भवति लङ्घनम्[2] ।
उत्तेजितं[1] रेचित[2] च, मध्यवेगेन या गति ॥२२५७॥

उत्तेरित[1]-मुपकण्ठ[2], तथाऽऽस्कन्दितक[3] खलु ।
उत्प्लुत्योत्प्लुत्य गमन, क्रोधादिवाखिलैः पदैः ॥२२५८॥

आश्वीनो[1] ऽध्वा स यो ऽश्वेन, दिनेनैकेन गम्यते ।

## * खलिननामानि *

खलीनं[1] खलिनं[2] चैव, कवियं[3] कविका[4] कवी[5] ॥२२५६॥

मुखयन्त्रण[6] पञ्चाङ्गी[7], नामानि सप्त सन्ति वै ।
मुखबन्धाश्रितं चर्म, तलिका[1] तलसारकम्[2] ॥२२६०॥

दामाञ्चनं[1] पादपाश.[2], पदबन्धन रज्जुषु ।
प्रक्षर[1] प्रखरः[2] स्याच्च, कवचं घोटकस्य वै ॥२२६१॥

चर्मदण्ड[1] कशा[2] चैव, ताडनायास्य जायते ।
वल्गो[1] वल्गा[2] कुशा[3] वागा[4], रश्मि[5] स्तथाऽवक्षेपणी[6] ॥२२६२॥

पल्ययन[1] च पर्याणं[2], पर्याणस्याऽस्ति नाम वै ।
वीत नाम पुन प्रोक्तं, तच्च फल्गु हयद्विपम् ॥२२६३॥

## * अश्वभेद [खच्चर] नामानि *

वेसरो[1] ऽश्वतरो[2] वेगसरो[3] ऽश्वस्य भिदा भवेत् ।

## * उष्ट्रनामानि *

उष्ट्रो[1] मयो[2] महाङ्ग[3] श्च, खप्प[4] कण्टकाशन[5] ॥२२६४॥

कुलनाशः[6] शल.[7] भोलि.[8], कुलनाश[9] क्रमेलक.[10] ।
द्विककुद्[11]दीर्घग्रीव[12] श्च, दाशेरो[13]दुर्गलङ्घन.[14] ॥२२६५॥

वासन्त.[15] शिशुनामा[16] च, मर्यो[17] मरुप्रियः[18] पुन. ।
मूतघ्न[19] श्चेति नामानि, मन्यन्ते रवणस्य वै ॥२२६६॥

करभाख्य[1] स्त्रिहायणो, बाल उस्ट्र इहोच्यते ।
स तु शृङ्खलक[1] काष्ठमयैः स्यात् पादबन्धनैः ॥२२६७॥

## ❀ गर्दभनामानि ❀

गर्दभो[1] रासभ[2] श्चैव, वालेय[3] श्च खर[4] पुनः ।
चक्रीवान्[5] चिरमेही[6] च, शङ्कुकर्णो[7] ऽपि कथ्यते ॥२२६८॥

## ❀ वृषभनामानि ❀

ऋषभो[1] वृषभो[2] ऽनड्वान्[3] भद्रो[4] वलीवर्दो[5] वृष[6] ।
शक्कर:[7] शाक्कर[8] उक्षा[9], सौरभेय[10] श्च शाङ्कर:[11] ॥२२६९॥

ककुद्मान्[12] वाडवेयो[13] गो[14], इचेति नामानि सन्ति वै ।
उक्षा यस्य समुत्पन्न स[1] जातोक्षो युवा वृष ॥२२७०॥

शकटो वाहने योग्य, स्कन्धिक:[1] स्कन्धवाहक[2] ।
उक्षतरो[1] महोक्ष[2] स्याद्, वृद्धोक्ष[1] स्तु जरद्गव[2] ॥२२७१॥

प्रार्षभ्य[1] षण्ढतोचित:, कूटो[1] भग्नविषाणक[2] ।

## ❀ षण्डनामानि ❀

षाण्ड[1] षण्ड[2] स्तथा सण्डो[3], गोवृषो[4] गोपति[5] पुनः ॥२२७२॥

इट्चर[6] इत्वर[7] श्चैव, प्रसिद्धो मदकोहल[8] ।
एतन्नामानि मन्यन्ते, षण्डस्य पण्डितै किल ॥२२७३॥

## ❀ वत्सनामानि ❀

तर्णः[1] शकृत्करि[2] श्चैव, ख्यातो वत्स[3] पुनर्भुवि ।
वत्सतर[1] स्तु दम्यो[2] वै, महावत्सो निगद्यते ॥२२७४॥

## ❀ वृषभभेदनामानि ❀

नस्योतो[1] नस्तित[2] श्चैव, नस्तोतः[3] कथ्यते पुन ।
प्रष्ठवाट्[1] हलवोढा[2] स्यात्, षष्ठवाट्[3] युगपार्श्वगः ॥२२७५॥

वोढारः स्युर्युगादीनां, प्रासङ्ग्य[1]-युग्य[2]-शाकटाः[3] ।
स च सर्वधुरीणो[1] वै, सर्वां वहति यो धुरम् ॥२२७६॥

[1]एकधुरीणैक [2]धुरावुभावेकधुरावहे ।
धुरन्धरो[1] धुरीण.[2] स्याद्, धुर्यो[3] धौरेयक[4] पुन ॥२२७७॥

धौरेयो[5] धूर्वह[6]श्चेति, नामानि कथयन्ति वै ।
गलि[1] र्दुष्टवृष[2] श्चैव, प्रोक्तः शक्तोऽप्यधूर्वह ॥२२७८॥

पृष्ठवाह्य[1] स्तथा पृष्ठ्य[2], स्थौरी[3] नामापि मन्यते ।
द्विदन्[1] षोडन्[2] द्वि-षड्दन्तौ,
वह.[1] स्कन्धोऽस्य[2] बन्धनम् ॥२२७९॥

ककुद्[1] चाऽशकूटं[2] स्यात्, ककुदं[3] कुकुदं[4] पुन ।
नैचिक[1] नैचिकी[2] तस्य, शिरो लोकेषु कथ्यते ॥२२८०॥

विषाण[1] कूणिका[2] शृङ्ग[3]. प्रोक्तं वृषस्य शृङ्गकम् ।
गलभागोऽस्य सास्ना[1], कथ्यते गलकम्बल[2] ॥२२८१॥

## गोनामानि ❀

अर्जुनी[1] रोहिणी[2] गौ श्च, शृङ्गिणी[4] सुरभि[5] स्तथा ।
उस्रा[6] ऽघ्न्या[7] सौरभेया[8] च,
तम्बा[9] तम्पा[10] निलिम्पिका ॥२२८२॥

अनड्वाही[12] च माहेयी[13], माहा[14] चाऽनडुही[15] पुन ।
उषा[16] माता[17] सप्तदश-नामानि प्रथितानि वै ॥२२८३॥

## ❀ गोभेदनामानि ❀

कृष्णा[1] च धवला[2] चैव, शबला[3] शवली[4] तथा ।
प्रष्ठौही[1] स्याच्च पष्ठौही[2], गर्भिणी[1] बालगर्भिणी[2] ॥२२८४॥

वन्ध्या[1] वशा[2] च सा गौः स्यात्, या न गर्भं दधाति वै ।
वेहद्[1] वृषोपगा[2] याति गर्भं धारयितु वृषम् ॥२२८५॥

अवतोका[1] स्रवद्गर्भा[2], वतोका[3] गर्भनाशिनी ।
सन्धिनी[1] च वृषाक्रान्ता[2] शण्ड संयोगकारिणी ॥२२८६॥

प्रौढवत्सा[1] तथा बष्कयिणी[2] बष्कयणी[3] पुनः ।
ख्याता चिरप्रसूता[4] सा, धेनु भेदा स्मृता भुवि ॥२२८७॥

नवसूतिका[1] तथा [2]धेनुर्दुग्ध यच्छति या बहु ।
बहुसूति[1] परेष्टु[2] स्याद् गृष्टि[1] सकृत् प्रसूतिका ॥२२८८॥

उपसर्या[1] च काल्या[2] पि, प्रजने कथ्यते बुधैः ।
सुव्रता[1] सुखदोह्या[2] च, या दुह्यते सुखेन सा ॥२२८९॥

करटा[1] दुःखदोह्या[2] सा, दु.खेन दुह्यते सदा।
वञ्जुला[1] बहुदुग्धा[2] सा, या बहुदुग्धप्रदा भवेत् ॥२२६०॥

द्रोणक्षीरा[1] तथा द्रोणदुग्धा[2] द्रोणदुधा[3] भवेत्।
पीवरस्तनी[1] पीनोध्नी[2], कथ्यते पण्डितैः पुनः ॥२२६१॥

धेनुष्या[1] पीतदुग्धा[2] च, संस्थिता दुग्धबन्धके।
नैचिकी[1] स्यादुत्तमा गौः मलिनी[1] बालगर्भिणी[2] ॥२२६२॥

पलिक्की[3] मन्यते सैव, बालगर्भवती च या।
समांसमीना[1] गौः स्याद्या, प्रतिवर्षं प्रसूयते ॥२२६३॥

सुकरा[1] ऽकोपना[2] ऽचण्डी[3], गौः स्याच्छान्तस्वभाविका।
वत्सला[1] वत्सकामा[2] स्याद्, या वत्स बहु सेवते ॥२२६४॥

चतुर्वर्षा[1] तथा चतुर्हायणी[2] कथ्यते पुनः।
त्रिहायणी[1] त्रिवर्षा[2] च, स्याद् द्विवर्षा[1] द्विहायनी[2] ॥२२६५॥

[1]एकवर्षाभिधा एक हायनी कापि गौर्भवेत्।
आपीन[1] मूधो[2] दुग्धधारकमङ्गमुच्यते ॥२२६६॥

❀ गोमयनाम ❀

गोविट्[1] गोमय[2] माख्यातं, पवित्रं[3] भूमिलेपनम्[4]।
गोग्रन्थिः[1] छगणं[2] चैव, करीषं[3] शुष्कगोमयम् ॥२२६७॥

गव्य[1] स्याद् वै गवां सर्वं, दुग्धं दधि घृतादिकम्।
व्रजो भवति गो स्थानं, गोकुल[2] गोधनं[3] धनम्[4] ॥२२६८॥

प्रजनः[1] स्यादुपसरो, गर्भं गृह्णाति सा यदा ।
शिवः[1] पुष्पलकः[2] कील[3], शङ्कुर्गो बन्धनाय यः ॥२२९९॥

गोबन्धनाय रज्जुः स्यात्, सदानं[1] दान[2] बन्धनम्[3] ।
दामनी[1] पशुरज्जु[2] श्च, यत्राऽनेकस्य बन्धनम् ॥२३००॥

❀ अजनामानि ❀

अजो[1] बस्त[2] छग[3] छाग[4], छगल[5] श्च स्तभ[6] स्तुभः[7] ।
तुभ[8] शुभ.[9] पशु[10] र्वरत[11], श्चेति नामानि सन्ति वै ॥२३०१॥

❀ अजानामानि ❀

अजा[1] मञ्जा[2] तथा छागी[3], छागिका[4] च गलस्तनी[5] ।
सर्वभक्षा[6] च नामानि, मञ्जाया कथयन्ति वै ॥२३०२॥

वर्करो[1] वर्करो[2] यूनो मञ्जस्य नाम कथ्यते ।

❀ मेषनामानि ❀

मेण्ढ[1] श्च मेण्ढको[2] मेष[3], सफालः[4] शृङ्गिल.[5] पुनः ॥२३०३॥
उरभ्र[6] उरणो[7] वृष्णि.[8], ऊर्णायु[9] श्च हुडो[10] हुडु[11] ।
एडको[12] रामशो[13] भेडो[14],
ऽवि[15] श्च नामानि सन्ति वै ॥२३०४॥

❀ मेषीनामानि ❀

मेषी[1] स्यात् कुररी[2] वेणी[3], जालकिनी[4] रुजा[5] ऽविला[6] ।

## ❀ वनबर्करनामानि ❀

पृष्ठशृङ्ग[१] स्त्विडिक्क[२] श्च, वनाज:[३] शिशुवाहक:[४] ॥२३०५॥

अविदुग्ध[१] मविसोढ[२], मविदूसं[३] तथैव हि ।
पुन श्चाविमरीसं[४] स्यात्, मेषीदुग्धस्य नाम वै ॥२३०६॥

## ❀ श्वाननामानि ❀

श्वा[१] श्वान:[२] सारमेय[३] श्च, स्वजातिद्विट्[४] शुन[५] शुनि[६] ।
रतशायी[७] रसापायी[८], रसनालिट्[९] रतान्दुक[१०] ॥२३०७॥

कुकुर:[११] कुर्कुर:[१२] क्रोधी[१३], कौलेयक[१४] श्च कुक्कुर:[१५] ।
शालावृक:[१६] कृतज्ञ[१७] श्च, कपिलो[१८] वक्रवालधि:[१९] ॥२३०८॥

इन्द्रमह[२०] श्चन्द्रमह[२१], स्तथेन्द्रमहकामुक[२२] ।
वनंतप:[२३] पुरोगामी[२४], मृगदंश[२५] श्च मण्डल:[२६] ॥२३०९॥

अस्थिभुक्[२७] भल्लह[२८] श्चैव, भषको[२९] भषणो[३०] रुरु:[३१] ।
शिवारि:[३२] सूचक:[३३] रात्रिजागर[३४] श्च रतव्रण[३५] ॥२३१०॥

रतकील[३६] स्तथा ग्राममृगो[३७] गृहमृग:[३८] पुन: ।
दीर्घनाद[३९] श्च नामानि, श्वानस्य प्रथयन्ति वै ॥२३११॥

अलर्को[१] रोगित: श्वान:, कथ्यते कोविदै: किल ।
मृगव्ये कुशल: श्वानो, विश्वकद्रु[१] श्च मन्यते ॥२३१२॥

## ❀ शुनीनामानि ❀

देवशुनी[१] शुनी[२] चैव, सरमा[३] कथ्यते पुन: ।

## ❀ शूकरनाम ❀

विट्चर [1] शूकरे ग्राम्ये, वन्योऽपि शूकरो भवेत् ॥२३१३॥

## ❀ महिषनामानि ❀

महिषः[1] स्कन्धशृङ्ग[2] श्च, धीरस्कन्ध[3] श्च सैरिभः[4]।
रक्ताक्ष [5] कृष्णशृङ्ग[6] श्च, कलुष [7] कासरः[8] पुनः ॥२३१४॥

कटाहो[9] हंसकालीतनय[10] श्च यमवाहनः[11]।
हेरम्बो[12] दशभीरुकः[13], जरातो[14] गद्गदस्वरः[15] ॥२३१५॥

लुलापो[16] लालिक[17] श्चैव, लुलाय[18] श्च रजस्वलः[19]।
वाहरिपु[20]स्तथा पिङ्गु [21],पिङ्ग[22] श्च यमरथस्तथा[23]॥२३१६॥

त्रयोविंशति नामानि, मन्यन्ते महिषस्य वै।
गवलो[1] जङ्गले जातो, महिषः कथ्यते बुधैः ॥२३१७॥

## ❀ सिंहनामानि ❀

सिंहो[1] हरि[2] श्च हर्यक्ष [3], शृङ्गोष्णीषः[4] सुगन्धिकः[5]।
पञ्चशिख[6] श्च पञ्चास्यः[7], पञ्चनखः[8] पलङ्कष [9] ॥२३१८॥

पारीन्द्रः[10] पुण्डरीक[11] श्च, मृगपति[12] मृगाशन [13]।
मृगदृष्टि[14] मृगारि[15] श्च, मृगद्विट्[16] नखरायुधः[17] ॥२३१९॥

महानादो[18] नभ क्रान्त [19], कण्ठीरव[20] श्च केसरी[21]।
इभारिः[22] रक्तजिह्व[23] श्च, वनराजो[24] गणेश्वरः[25] ॥२३२०॥

शैलाट.[२६] श्वेतपिङ्ग[२७] श्च, व्यादीर्णास्य[२८] स्तथैव च ।
पारीन्द्र[२९] श्चित्रकाय[३०] श्च, सिंहनामानि सन्ति वै ॥२३२१॥

## ❀ व्याघ्रनामानि ❀

व्याघ्रो[१] द्वीपी[२] च शार्दूल[३], श्चित्रकाय[४] श्च चित्रक[५] ।
पुण्डरीक[६] श्च नामानि, व्याघ्रस्य प्रथयन्ति वै ॥२३२२॥

लघुव्याघ्र स्तरक्षु:[१] स्यात्, तरक्ष[२] श्च मृगादन[३] ।

## ❀ अष्टापदनामानि ❀

शरभ[१] कुञ्जराराति[२], श्चाष्टापद[३] स्तथाऽष्टपाद्[४] ॥२३२३॥

उत्पादक[५] श्च नामानि, मन्यन्ते शरभस्य वै ।

## ❀ गवयनामानि ❀

गवयो[१] गोसदृक्ष[२] स्याद्, वनगवो[३] ऽश्ववारण[४] ॥२३२४॥

## ❀ खड्गिनामानि ❀

खड्गो[१] वाध्रीणस:[२] खड्गी[३] कथ्यते गण्डको[४] ऽपि वै ।

## ❀ सूकरनामानि ❀

सूकर:[१] सुकर[२] क्रोड:[३], पङ्कक्रीडनक.[४] पुन: ॥२३२५॥

किर.[५] किटि[६] किरि[७] कोल.[८], कुमुख[९] श्च तलेक्षण:[१०] ।
कामरूपी[११] शिरोमर्मा[१२], स्तब्धरोमा[१३] बहुप्रज:[१४] ॥२३२६॥

वराहो[15] वक्रदंष्ट्र[16] श्च, भूदार:[17] सलिलप्रिय:[18] ।
गृष्टि[19] घृंष्टि[20] स्तथा घोणी[21],
दंष्ट्री[22] स्तथाऽऽस्यलाङ्गल[23] ॥२३२७॥

आखनिक[24] स्तथा पोत्री[25], स्थूलनाश[26] स्तथैव च ।
इति सूकरनामानि, मन्यन्ते पण्डितै किल ॥२३२८॥

❀ भल्लूकनामानि ❀

ऋक्ष[1] स्तथाऽच्छभल्ल[2] श्च, भल्लूको[3] भल्लुक:[4] पुन ।
भालूक[5] श्चापि भाल्लूक[6], श्चेति नामानि सन्ति वै ॥२३२९॥

❀ शृगालनामानि ❀

शृगाल[1] श्च सृगालो[2] वै, शकुनावेदनी[3] शिव[4] ।
फेरण्ड.[5] फेरव[6] फेरु[7], जम्बूक.[8] जम्बुकः[9] पुनः ॥२३३०॥

गोमायु[10] र्घोरवासी[11] च, क्रोष्टा[12] च मृगधूर्त्तक[13] ।
भरुजो[14] भूरिमाय[15] श्च, वञ्चुको[16] वञ्चक[17] पुन ॥२३३१॥

हूखो[18] ऽष्टादश नामानि, मन्यन्ते जम्बुकस्य वै ।
किखिः[1] कोऽपि भवेत् प्राणी, शृगालसदृशो वने ॥२३३२॥

लोपाको[1] गुण्डिव[2] कोऽपि, शृगालाकृति सदृश ।

❀ वृकनामानि ❀

अरण्यश्वा[1] वृकः[2] कोकः[3], ईहामृगो[4] ऽपि कथ्यते ॥२३३३॥

## ❀ मर्कटनामानि ❀

शाखामृग.[1] कपि[2] कीश[3], प्लवङ्ग[4] प्लवग[5] पुनः ।
प्लवङ्गम[6] प्रवङ्ग[7] श्च, बलिमुखो[8] बलीमुख[9] ॥२३३४॥

मर्कटो[10] वानर[11] श्चैव, वनौकाश्च[12] तथा हरि.[13] ।
एतन्नामानि मन्यन्ते, मर्कटस्य महीतले ॥२३३५॥

श्यासमुखो गोलाङ्गूलो[1], लोके लङ्गूर उच्यते ।

## ❀ मृगनामानि ❀

ख्यातो मृग[1] कुरङ्ग[2] श्च, सारङ्गो[3] हरिण[4] पुन. ॥२३३६॥

वनायु[5] श्चैव वानायु[6], र्वातायु[7] श्चापि कथ्यते ।
पुनश्चाऽजिनयोनि[8] र्वै, मृगनाम हि मन्यते ॥२३३७॥

## ❀ मृगभेदनामानि ❀

मृगभेदा न्यङ्कु[1]-रङ्कु[2]-रुरु[3]-रोहिष[4]-रोहिषा.[5] ।
चमूरु[6]-चमर[7]-चीना[8],समूरै[9]-ण[10]-र्श्य[11]-रोहिता[12]॥२३३८॥

ऋष्य[13]-समूरु[14]-गोकर्णा[15], प्रियक[16] पृषत[17] स्तथा ।
शम्बर:[18] शंवर[19] श्चैव, संवर:[20] कदली[21] पुनः ॥२३३९॥

कन्दली[22] कृष्णशार[23] श्च, कृष्णसारो[24] ऽपि कथ्यते ।
दक्षिणेर्मा[1] मृगः सोऽस्ति, यो व्याधैर्दक्षिणे क्षतः ॥२३४०॥

वातमृगो[1] वातप्रमी[2], वायुवेग समो मृग. ।

## ❀ शशनामानि ❀

लोमकर्ण.[1] शशः[2] स्याद्वं, शूलिक[3] मृदुलोमकः[4] ॥२३४१॥

## ❀ शल्यकनामानि ❀

शल्यक[1] शलल[2] शल्य.[3], श्वाविच्चेत्यपि कथ्यते ।
मन्यते तच्छलाकायां, शललं[1] शलली[2] शलम्[3] ॥२३४२॥

## ❀ गोधानामानि ❀

गोधा[1] नाम निहाका[2]ऽपि, कथ्यते कोविदैः किल ।
गोधारो[1] नाम गौधेरो[2], दुष्टे तन्नन्दने खलु ॥२३४३॥

गौधेयोऽन्यत्रचप्रोक्तो, गोधाया शुभनन्दने ।

## ❀ पल्लीनामानि ❀

मुसली[1] मुशली[2] पल्ली[3], माणिक्या[4] गृहगोलिका[5] ॥२३४४॥

गृहोलिका[6] तथा कुड्य-मत्स्य[7] श्च गृहगोधिका[8] ।
भित्तिका[9] चेति नामानि, माणिक्यायाः भवन्ति वै ॥२३४५॥

तथाऽञ्जनाधिका[1] हालि[2]-र्व्यञ्जनिका[3] हलाहलः[4] ।
स्थूलाऽञ्जनाधिकायां स्याद्, ब्राह्मणी[1] रक्तपुच्छिका[2] ॥२३४६॥

## ❀ सरटनामानि ❀

सरटः[1] प्रतिसूर्यः[2] स्यात्, प्रतिसूर्यशयानक[3] ।

कृकलास[4] कृकुलास:[5], कृकलाश.[6] शयानक.[7] ॥२३४७॥

❀ मूषकनामानि ❀

मुषको[1] मूषक[2] श्चैव, मूषिको[3] वृषलोचन[4] ।
सूच्यारय:[5] खनको[6] वज्रदशन[7] उन्दरो[8] वृष:[9] ॥२३४८॥

उन्दुर[10] उन्दुरु[11] राखु[12], रिति नामानि सन्ति वै
छुछुन्दरी[1] गन्धमूषी[2], सैवास्ति गन्धमूषिका[3] ॥२३४९॥

गिरिका[1] वै खटाखु[2] श्च, कथ्यते बालमूषिका[3] ।

❀ मार्जारनामानि ❀

मार्जार[1] श्च बिडाल:[2] स्याद् बिडालो[3] वृषदंशक.[4] ॥२३५०॥

आखुभुक्[5] चाऽऽखुभुग्[6] हीकु[7], रोतु[8] रित्यपि कथ्यते ।
वनबिलाडो[1] नासापि मन्यते पण्डितै पुन ॥२३५१॥

मण्डली[1] गात्रसङ्कोची[2], जाहक[3] श्चापि ज्ञायताम् ।

❀ नकुलनामानि ❀

नकुल:[1] पिङ्गलो[2] बभ्रु:[3] सर्पहा[4] प्रथित: सदा ॥२३५२॥

❀ सर्पनामानि ❀

अहि[1] सर्प[2] पृदाकु[3] श्च, पन्नग:[4] पवनाशन.[5] ।
उरगो[6] भुजगो[7] भोगी[8], भुजङ्ग[9] श्च भुजङ्गम:[10] ॥२३५३॥

द्विजिह्वो[11] दीर्घजिह्व[12] श्च, दीर्घपृष्ठ[13] सरीसृप.[14] ।
दृक्कर्णो[15] दन्दशूक[16] श्च, दर्वीकरो[17] बिलेशय[18] ॥२३५४॥

हरि[19] श्चक्षु:श्रवा[20] श्चक्री[21], कुम्भीनस[22] श्च कञ्चुकी[23]।
जिह्मगो[24] लेलिहान[25] श्च,
व्याडो[26] व्याल[27] श्च कुण्डली[28] ॥२३५५॥

आशीविष[29] श्च गोकर्ण:[30], आशीर्विष[31] श्च गूढपात्[32] ।
विषधर[33] स्तथा भोग-धर[34] फणधर[35] पुनः ॥२३५६॥

द्विरसन[36] स्तथा काको-दर[37] श्च फणभृत्[38] किल ।
अष्टात्रिंशद्धिनामानि सर्पस्य सम्भवन्ति वै ॥२३५७॥

## ❀ सर्पभेदा: ❀

द्विमुखो[1] ऽहीरणी[2] राज-सर्प[3] श्चाऽहीरण[4] स्तथा ।
भुजङ्गभोजीति[5] पञ्च सर्पभेदा. स्मृता: पुन ॥२३५८॥

## ❀ अजगरनामानि ❀

अजगर:[1] शयु[2] श्चैव, पारीन्द्र[3] श्चक्रमण्डली[4] ।
वाहस[5] श्चेति नामानि, मन्यन्तेऽजगरस्य वै ॥२३५९॥

## ❀ जलसर्पनामानि ❀

अलगर्दो[1] ऽलगर्द्ध[2] श्च, जलव्याल[3] स्तथैव च ।
अलीगर्द[4] श्च नामानि, जलसर्पस्य सन्ति वै ॥२३६०॥

दुण्डुभो[1] दुन्दुभ[2] श्चैव, राजीलो[3] राजिल[4] पुन ।
डुण्डुभ[5] श्चेति नामानि, निर्विषस्यैव तस्य वै ॥२३६१॥

तिलित्सो गोनसो[2] नाम, गोनासो[3] नाम, घोणस[4] ।
कुक्कुटाहि[1] कुक्कुटाभो[2], वर्णेन रूपेण च ॥२३६२॥

काद्रवेया[1] स्तथा नागा[2] -स्तेषां भोगावती[1] पुरी ।

❀ शेषनागनामानि ❀

पुन र्नागाधिप[1] शेष[2], एककुण्डल[3] आलुक[4] ॥२३६३॥

अनन्तो[5] द्विसहस्राक्ष:[6] षण्णामानि सन्ति वै ।
स च कृष्णोऽथवा शुक्ल, सितपङ्कजलाञ्छन[1] ॥२३६४॥

❀ वासुकिसर्पनामानि ❀

वासुकि[1] सर्पराज[2] श्च, नीलोत्पललाञ्छन:[3] स च ।
त्रीण्येतानि नामानि, श्वेते नीलसरोजवति ॥२३६५॥

तक्षक[1] स्याल्लोहिताङ्ग, स्वस्तिकाङ्कितमस्तक ।
महापद्मो[1] ह्यतिश्वेतो, दशाबिन्दुकमस्तक ॥२३६६॥

शङ्ख[1] स्यात् पीतो बिभ्राणो, रेखां चन्द्रसितां गले ।
कुलिको[1] ऽर्द्धेन्दुमस्तक, ज्वालाधूमसमप्रभ ॥२३६७॥

अथ कम्बला[1]-ऽश्वतर[2]-धृतराष्ट्र[3]-बलाहका:[4] ।
महानीलो[1]ऽपि नागोऽस्ति, विशिष्ट कुल सम्भव: ॥२३६८॥

अत्रोक्ता विविधा सर्पास्तत्तत्कुलसमुद्भवाः ।
निर्मुक्तो[1] मुक्तनिर्मोको[2], मुक्तकञ्चुक[3] इत्यपि ॥२३६९॥

सविषा:[1] भुजगास्तेस्युर्निर्विषा[1] वाहसादय ।
सर्पा स्यु र्दृग्विषा[1] लूमविषा[2] स्तु वृश्चिकादय ॥२३७०॥

पुन र्लोमविषा:[1] केचिद् व्याघ्रप्रमुखजन्तव ।
तथा नखविषा. ख्याता, नरप्रमुखप्राणिन ॥२३७१॥

पुन र्लालाविषा लोके, लूताद्या प्रथयन्ति वै ।
कालान्तरविषा:[1] स्यु र्वै मूषिकाद्याश्च जन्तवः ॥२३७२॥

दूषीविष[1] तु तज्ज्ञेय-मवीर्यमौषधादिभिः ।
कृत्रिम च विषं चार[1], गर[2] श्चोपविषं भवेत् ॥२३७३॥

अहिकाय[1] स्तथा भोग[2], सर्पकायश्च[3] कथ्यते ।
आशी[1] स्तथाऽहिदंष्ट्रा[2] स्यात् सर्पदंष्ट्रा तथैव च ॥२३७४॥

## ❀ सर्पफणनामानि ❀

फण[1] फट[2] स्फटो[3] भोगो[4], दर्वी[5] दर्वि[6] स्तथैव च ।
इति नामानि मन्यन्ते, सर्पगणस्य साक्षरै ॥२३७५॥

## ❀ सर्पकञ्चुकनामानि ❀

अहिकोश[1] श्च निर्मोको[2], निर्ल्वयनी[3] श्च कञ्चुक[4] ।
अहित्वक्[5] चेति नामानि, सर्पस्य कञ्चुकस्य वै ॥२३७६॥

॥ इति स्थलचरपञ्चेन्द्रियजीवा समाप्ता ॥

## अथ खेचरपञ्चेन्द्रियनामानि

### ❀ विहगनामानि ❀

विहगो[१] विकिरो[२] वाजी[३], विहङ्ग[४] श्च विहङ्गमः[५] ।
वारङ्ग[६] श्चैव वारङ्गि[७], विष्किर[८] श्च विविष्किरः[९] ॥२३७७॥

पक्षी[१०] पत्री[११] पतत्रि[१२] श्च, पतत्री[१३] पतगः[१४] पतन्[१५] ।
पत्ररथः[१६] पतङ्ग[१७] श्च,
पित्सन्[१८] वयो[१९] द्विजः[२०] पुनः ॥२३७८॥

शकुनः[२१] शकुनि[२२] श्चैव, गरुत्मान्[२३] चञ्चुमान्[२४] खग.[२५] ।
शकुन्त[२६] श्च शकुन्ति[२७] श्च, नगौका[२८] नभसङ्गमः[२९]॥२३७९॥

अगौका[३०] श्चाऽण्डजो[३१] नाडीचरणो[३२] रसनारद[३३] ।
नीडोद्भव[३४] श्च कण्ठाग्नि[३५],
नीडजो[३६] लोमकी[३७] पुन· ॥२३८०॥

ख्यातं नाम विहाया[३८] श्च, कीकसमुख[३९] इत्यपि ।
सर्वाण्येतानि नामानि मन्यन्ते पक्षिणां बुधै ॥२३८१॥

चञ्चु[१] श्चञ्चू[२] स्तथा त्रोटि[३], सृपाटी[४] च सृपाटिका[५] ।
पत्रं[१] पिच्छं[२] पतत्र[३] ञ्च, वाज[४] तथा तनूरुहम्[५] ॥२३८२॥

पक्षो[१] गरु[२] -च्छदः[३] पिञ्छ[४], मिति नामान्यपि क्वचित् ।
पक्षिचञ्चो हि मन्यन्ते, पक्षमूल[१] तु पक्षति[२] ॥२३८३॥

प्रडीनो[१]-ड्डीन[२]-सण्डीन[३]-डयनानि[४] नभोगतौ ।

## ❀ अण्डनामानि ❀

अण्डं[1] पेशि[2] स्तथा पेशी[3], पेशीकोश[4] पुन खलु ।
कोश.[5] कोष[6] श्च विज्ञेयं नामषट्क सुकोविदैः ॥२३८४॥

## ❀ पक्षिगृहनामानि ❀

नीड[1] स्तथा कुलाय[2] श्च, पक्षिणो गृहमुच्यते ॥२३८५॥

## ❀ मयूरनामानि ❀

मयूरो[1] मयुक[2] श्चैव, मयूको[3] मरुकः[4] पुनः ।
वर्ही[5] मार्जारकण्ठ[6] श्च, मेघनादानुलासक[7] ॥२३८६॥

नीलकण्ठो[8] नगावासो[9], नृत्यप्रिय[10] श्च चन्द्रकी[11] ।
बर्हिणो[12] बहुलग्रीवः[13], खिलखिल्लो[14] गरव्रतः[15] ॥२३८७॥

शुक्लापाङ्गः[16] शिखी[17] चापि, स्थिरमद[18] शिखाबलः[19] ।
केकी[20] मेघसुहृद्[21] नाम सर्पभुक्[22] चित्रपिङ्गलः[23] ॥२३८८॥

एतन्नामानि मन्यन्ते, मयूरस्य बुधै रिह ।
केका[1]ऽस्य वाक् तथा पिच्छं[1], शिखण्ड[2] श्च शिखण्डकः[3]॥२३८९॥

कलाप.[4] प्रचलाक[5] श्च, केकिपिच्छस्य नाम वै ।
मयूरपिच्छचन्द्रस्य, नाम्नी चन्द्रक[1]-मेचकौ ॥२३९०॥

## ❀ कोकिलनामानि ❀

कोकिल[1] कोकिला[2] चैव, कलकण्ठः[3] कुनालिकः[4] ।

मधुकण्ठः[५] सुधाकण्ठः[६], काकपुष्ट.[७] कुहूमुख.[८] ॥२३९१॥

ताम्राक्ष.[९] कामतालो[१०] वै, काकजात[११] स्तथैव च ।
मदोल्लापी[१२] पिक[१३] श्चापि, परपुष्टो[१४] वनप्रिय[१५] ॥२३९२॥

परभृतो[१६] ऽन्यभृत[१७] श्च, मधुघोषो[१८] रतोद्वह.[१९] ।
घोषयित्नु:[२०] पोषयत्नु[२१] श्चेति नामानि सन्ति वै ॥२३९३॥

## ❀ काकनामानि ❀

काको[१]ऽरिष्टो[२] द्विको[३] ध्वाङ्क्षो[४], घूकारि[५] करटो[६] ऽन्यभृत्[७]।
एकदृक्[८] चिरजीवी[९] च, वायसः[१०] परभृत्[११] पुन. ॥२३९४॥

बलिभुक्[१२] बलिपुष्ट[१३] श्च, मौकुलि[१४] श्च सकृत्प्रजः[१५] ।
आत्मघोष[१६] श्च नामानि, कथ्यन्ते काकपक्षिण. ॥२३९५॥

अथज्ञेयो वृद्धकाको[१], द्रोणकाको[२] ऽतिहिंसकः ।
दग्धकाक.[३] कृष्णकाक.[४], पर्वतकाक[५] इत्यपि ॥२३९६॥

वनाश्रय[६] श्च काकोल.[७] सप्त भेदा. प्रकीर्त्तिता. ।
काकभेदे पुनर्ज्ञेयो–मद्गु[१] श्च जलवायसः[२] ॥२३९७॥

## ❀ उलूकनामानि ❀

उलूक.[१] कौशिको[२] घूक[३], काकारि.[४] पेचकः[५] पुनः ।
दिवान्ध[६] श्च दिवाभीतो[७], निशाट.[८] कथ्यते तथा ॥२३९८॥

## ❀ कुक्कुटनामानि ❀

कुक्कुट:[1] कृकवाकु[2] श्च, नन्दीको[3] मणिकण्ठक:[4] ।
उषाकीलो[5] महायोगी[6] कलाधिक[7] शिखण्डिक[8] ॥२३९९॥

रणेच्छु[9] रारणी[10] बोधि[11], श्चित्रवाज[12] श्च स्वस्तिक[13] ।
विवृताक्षो[14] निशावेदी[15], विशोक[16] पुष्टिवर्धन:[17]॥२४००॥

मयूरचटक[18] श्चर्मचूड[19] श्च चरणायुध[20] ।
शौण्ड[21] श्च दीर्घनादो[22] वै, ताम्रचूडो[23] नखायुध:[24] ॥२४०१॥

विष्किर[25] श्चेति नामानि, कथ्यन्ते कुक्कुटस्य वै ।
घाज[1] स्याद् ग्रामकुक्कुटो[2], यो ग्रामे दृश्यते जनै: ॥२४०२॥

## ❀ हंसनामानि ❀

हसा[1] सितच्छदा[2] श्वेतगरुतो[3] मानसौकस[4] ।
चक्राङ्गा[5] श्चाथ वक्राङ्गा:[6], मराला:[7] पुनरत्र वै ॥२४०३॥

राजहंसा[1] स्त्वमी चञ्चुपादाभ्यां ये च लोहिता: ।
मलिना मल्लिकाक्षा:[1] स्यु, र्धार्त्तराष्ट्रा:[1] सितेतरा: ॥२४०४॥

कलहंसा[1] श्च कादम्बा:[2], अतिधूसरपक्षका: ।

## ❀ हंसपत्नीनामानि ❀

वरटा[1] वारटा[2] हंसी[3], वरला[4] वारला[5] च सा ॥२४०५॥

दार्वाघाट:[1] शतपत्र:[2], काष्ठ कुट्टनकारक: ।

खञ्जनः[1] खञ्जरीट[2] श्च, लघुपक्षी कवेः प्रियः ॥२४०६॥

## ❀ सारसनामानि ❀

सारसो[1] लक्ष्मणः[2] कामी[3], मैथुनी[4] रक्तमस्तकः[5] ।
श्येनाक्ष[6] श्चापि श्येनास्यो[7], गोनर्दो[8] दीर्घजानुकः[9] ॥२४०७॥
कुरङ्करः[10] पुष्कराख्यो[11], नामानि सारसस्य वै ।

## ❀ सारसीनामानि ❀

सारसी[1] लक्ष्मणा[2] प्रोक्ता, लक्षणा[3] लक्ष्मणी[4] च सा ॥२४०८॥

## ❀ क्रौञ्चनामानि ❀

क्रुञ्चः[1] क्रौञ्च[2] श्च क्रुङ्[3] पुंसि, क्रुञ्चा[1] क्रौञ्ची[2] स्त्रियां भवेत् ।

## ❀ चाषनामानि ❀

चाषः[1] किकीदिविः[2] श्चैव,
किकिः[3] किकी[4] दिवो[5] दिविः[6] ॥२४०९॥
किकिदिविः[7] किकीदीविः[8], किकीदिवी[9] किकीदिवः[10] ।
किकिदिव[11] श्च नामानि, चाषस्य संभवन्ति वै ॥२४१०॥

## ❀ चातकनामानि ❀

चातकः[1] स्तोककः[2] ख्यातः, पप्पीह[3] श्च नभोऽम्बुपः[4] ।
तोकक[5] श्चैव सारङ्ग[6], शारङ्गो[7] ऽपि च कथ्यते ॥२४११॥

### ❀ चक्रवाकनामानि ❀

चक्रवाको[१] रथाङ्गाह्व:[२], कोको[३] द्वन्द्वचरो[४] ऽपि सः ।

### ❀ टिट्टिभनामानि ❀

उत्पादशयन.[१] संज्ञा, कटुकाण[२] श्च टिट्टिभ:[३] ॥२४१२॥

टिटिभक[४] स्तथा टिट्टिभक[५] श्च टीटिभो[१] ऽपि च ।

### ❀ चटकनामानि ❀

चटक[१] स्तु कुलिङ्ग[२] श्च, कलविङ्क:[३] कुलिङ्कक:[४] ॥२४१३॥

स्याद् गृहबलिभुक्[५] चेति, नामानि चटकस्य वै ।

चटका[१] तस्य योषिद् वै, स्त्र्यपत्ये चटका[१] तयो. ॥२४१४॥

चाटकैरस्तु विज्ञेय', पुमपत्ये बुधै र्जनैः ।

### ❀ दात्यूहनामानि ❀

दात्यूह[१] श्चैव दात्योहो[२], दात्यौह:[३] कालकण्टक:[४] ॥२४१५॥

जलरङ्कु[५] र्जलरञ्ज[६], स्तथा वै कालकण्ठक[७] ।

नामान्येतानि सप्तैव, मन्यन्ते पण्डितै र्जनैः ॥२४१६॥

### ❀ बकनामानि ❀

बक:[१] कह्वो[२] बकोट[३] श्च, स्याद् बलाको[१] बलाहक:[२] ।

बकेरुका[१] बकेरु[२] स्तु, बलाका[३] बिसकण्ठिका[४] ॥२४१७॥

विसकण्टिका[५] पि नाम तथैव विसकण्ठिका[६] ।
बकपत्न्या श्च नामानि षडेव पठितानि वै ॥२४१८॥

❀ भृङ्गनामानि ❀

कलिङ्ग[१] श्चाथ धूम्याट[२], भृङ्गो[३] नामानि त्रीणि वै ।

❀ कङ्कपक्षिनामानि ❀

कङ्क.[१] स्याल् लोहपृष्ठ[२] श्च, कर्कटः[३] कमनच्छद.[४] ॥२४१९॥
दीर्घपाद[४] स्तथा स्कन्धमल्लकः[६] कथ्यते पुन ।

❀ चिल्लनामानि ❀

आतापी[१] शकुनि[२] श्चिल्ल[३], स्तथाऽऽतायी[४]च मन्यते ॥२४२०॥

❀ श्येनपक्षिनामानि ❀

श्येनः[१] शशादनः[२] पत्री[३], नामानि श्येनपक्षिण ।

❀ गृध्रस्यनामानि ❀

गृध्र[१] श्च पुरुषव्याघ्रः[२], शकुनि.[३] कूणितेक्षण.[४] ॥२४२१॥
आज.[५] सुदर्शन[६] श्चैव, दाक्षाय्यो[७] दूरदृक्[८] पुनः ।
कामायु[९] श्चेति नामानि, गृध्रस्य संभवन्ति वै ॥२४२२॥

❀ कुररस्यनामानि ❀

उत्क्रोशः[१] कुररो[२] नाम, तथा च मत्स्यनाशन.[३] ।

### ❀ शुकस्यनामानि ❀

रक्ततुण्ड.[1] शुक:[2] कीर [3], श्रीमान्[4] वै प्रियदर्शन.[5] ।।२४२३।।
मेधातिथि[6] श्च मेधावी[7], वाग्मी फलादन [8] पुन ।
शुकस्य नवनामानि, कथ्यन्ते कोविदै किल ।।२४२४।।

### ❀ सारिकानामानि ❀

शारिका[1] सारिका[2] चैव, गोराटी[3] गोकिराटिका[4] ।
पीतपादा[5] च नामानि, सारिकाया: भवन्ति वै ।।२४२५।।

### ❀ चर्मचटकानामानि ❀

जतूका[1] जतुका[2] चर्मचटका[3] ऽजिनपत्रिका[4] ।
अजिनपत्रा[5] नामाऽपि, जतुकाया श्च कथ्यते ।।२४२६।।

### ❀ वल्गुलिकानामानि ❀

वल्गुलिका[1] परोष्णी[2] च, मुखविष्टा[3] निशाटनी[4] ।
तैलपायिका[1] नामाऽपि, जतुकाभेद उच्यते ।।२४२७।।

### ❀ करेटुनामानि ❀

करेटु.[1] कर्करेटु[2] श्च, करटु.[3] कर्कराटुक.[4] ।
कर्कराटु[5] श्च नामानि, करटो: संभवन्ति वै ।।२४२८।।

### ❀ शरारिनामानि ❀

आटि[1] राटी[2] शराटि[3] श्च, शराडि [4] शरारि[5] स्तथा ।

आति[६] राडी[७] शरालि[८] श्च, शरालि[९] शराली[१०] पुनः ॥२४२९॥

❀ क्रकर नाम ❀

क्रकरः[१] कृकणो[२] नाम-द्वयं क्रकर पक्षिण ।

❀ शकुन्त नाम ❀

भास[१] स्तथा शकुन्त[२] श्च, भासनाम द्वयं स्मृतम् ॥२४३०॥

❀ जलकुक्कुभ नामानि ❀

कोयष्टिः[१] शिखरी[२] चैव, जलकुक्कुभ उच्यते ।

❀ कपोतनामानि ❀

पारापतः[१] कपोत[२] श्च, ख्यातः पारावत[३] पुन ॥२४३१॥

कलरव[४] स्तथा रक्तलोचनो[५] ऽपि च कथ्यते ।

❀ चकोरनामानि ❀

चकोर[१] श्चलचञ्चु[२] श्च, तथैव विषसूचकः[३] ॥२४३२॥

नाम ज्योत्स्नाप्रियो[४] लोके चकोरस्य चतुर्थकम् ।

❀ गुन्द्रालनामानि ❀

जीवंजीव[१] श्च गुन्द्रालो[२], विषदर्शनमृत्युकः[३] ॥२४३३॥

❀ व्याघ्राटनामानि ❀

व्याघाट[१] श्च भरद्वाजो[२], भारद्वाजो[३] ऽपि ज्ञायताम् ।

### ❀ प्लवनाम ❀

प्लव[1] श्च गात्रसंप्लवो[2], नाम द्वयं निगद्यते ॥२४३४॥

### ❀ तित्तिरि नाम ❀

तित्तिरि.[1] खरकोण[2] श्च, नाम तित्तिरिपक्षिणः ।

### ❀ हारीत नाम ❀

हारीतस्य द्वयं नाम, हारित[1] श्च गृदड्कुरः[2] ॥२४३५॥

### ❀ मरुल नाम ❀

मरुलो[1] मरुलस्य स्याद्, नाम कारण्डव [2] पुन. ।

### ❀ सुगृह नाम ❀

सुगृह[1] प्रथमं नाम, द्वितीय ञ्चञ्चुसूचिकः[2] ॥२४३६॥

### ❀ कुक्कुभनामानि ❀

कुक्कुभः[1] कुहकस्वनः[2], स्यात् कुम्भकारकुक्कुटः[3] ।

### ❀ दीपकपक्षि नाम ❀

गृह्यन्ते पक्षिणा येन, पक्षिणोऽन्ये स दीपकः[1] ॥२४३७॥

### ❀ छेक—नाम ❀

छेका[1] गृह्या[2] श्च ते प्रोक्ताः, ये भवन्ति गृहस्थिताः ।
पञ्चेन्द्रियाः पक्षिभेदा सर्वे इमे तु खेचराः ॥२४३८॥

॥ इति खेचरपञ्चेन्द्रियजीवनामानि ॥

## अथ जलचरपञ्चेन्द्रियनामानि

### ❀ मत्स्यनामानि ❀

मत्स्यो[१] मीनो[२] मूको[३] मत्स[४], शम्बर:[५] शंवर[६] स्तिमि.[७] ।
आत्माशी[८] शकली[९] शल्की[१०],
विसार:[११] स्वकुलक्षय:[१२] ॥२४३९॥

अण्डज.[१३] स्थिरजिह्व[१४] श्च, पृथुरोमा[१५] जलाशय:[१६] ।
झष:[१७] वैसारिण[१८] श्चैव[१९],
आत्माशी[२०] जलपिप्पक:[२१] ॥२४४०॥

सङ्घचारी[२२] च नामानि, सामान्यानि भवन्ति वै ।

### ❀ मत्स्यविशेषनामानि ❀

वदाल:[१] सहस्रदंष्ट्रो[२], वादाल[३] एतन[४] पुन: ॥२४४१॥

जलवाल[५] श्च नामानि, वादालस्य हि सन्ति वै ।
पाठीन[१] श्चित्रवल्लिको[२], मकुपाठक[३] इत्यपि ॥२४४२॥

शकुले[१] कलक.[२] स्याच्च, गडके[१] शकुलार्भक.[२] ।
उलूपो[१] शिशुके[२] स्याच्च शफरे[१] श्वेतकोलक:[२] ॥२४४३॥

प्रोष्ठी[३] नामाति विख्यातं, वर्त्तते शफरस्य वै ।
नडमीनो[१] नलमीन[२], श्चिलिच्चिम[३] श्चिलिचिमि:[४] ॥२४४४॥

रोहितो[१] मत्स्यराज.[२] स्याद् राजशृङ्ग[१] स्तु मद्गुर:[२] ।

शृङ्गी[1] तु मद्गुरप्रिया[2], व्यवहारे प्रसिद्ध्यति ॥२४४५॥

क्षुद्राण्डमत्स्यजातः स्यात्, पोताधानं[1] जलाणुकम्[2] ।
नन्द्यावर्त्तो[1] महामत्स्या[2], श्चीरिल्लि[3] श्च तिमिङ्गलः[4] ॥२४४६॥

तिमिङ्गिलगिल[5] श्चेति मत्स्यभेद उदाहृतः ।
महामत्स्यस्य नामानि, पञ्चैव प्रथितानि वै ॥२४४७॥

स्यु र्यादांसि[1] नक्राद्या, हिंसका जलजन्तवः ।

## ❀ महामुखनामानि ❀

आलास्यो[1] गोमुखो[2] नक्रो[3], कुम्भी[4] च जलसूकरः[5] ॥२४४८॥

कुम्भीर[6] स्तालुजिह्व[7] श्च, शङ्खमुखो[8] महामुखः[9] ।
शङ्कुमुख[10] श्च नामानि, मन्यन्ते गोमुखस्य वै ॥२४४९॥

## ❀ शिशुमारनामानि ❀

अम्बुकूर्म[1] उष्णवीर्य[2], शिशुमारो[3] महावलः[4] ।
जलकपि[5] श्च नामानि, शिशुमारस्य सन्ति वै ॥२४५०॥

## ❀ जलमार्जारनामानि ❀

उद्र[1] श्च जलमार्जारः[2], पानीयनकुलो[3] वसी[4] ।
एतन्नामानि कथ्यन्ते, पानीयनकुलस्य वै ॥२४५१॥

## ❀ ग्राहनामानि ❀

ग्राहो[1] स्तन्तु[2] स्तथा नाग[3], स्तन्तुनाग[4] श्च तन्तुण[5] ।

